तम् । क्षौरप्रयाणभैषज्यविवादेषुनशोभनम् ६ षष्ठ्यमापूर्णिमापातचतुर्दश्य-
ष्टमीतथा । आसुसन्निहितंपापंतैलेषुस्त्रीभगेक्षुरे ७ राजकार्यनियुक्तानांनरा-
णांभूपजीविनाम् । श्मश्रुलोमनखच्छेदेनास्तिकालविशोधनम् ८ क्षौरंनैमित्ति-
कंकार्यंनिषेधेसत्यपिध्रुवम् । यज्ञेमृतौवन्धमोक्षेनृपविप्राज्ञयापिच ९ प्राग्व-
यस्कैःसपितृकैर्नकार्यंमुण्डनंसदा । मुण्डनस्यनिषेधेपिकर्तनंतुविधीयते १०
उदङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः । केशश्मश्रुलोमनखान्युदक्संस्था-
निवापयेत् ११ आनर्तोहिच्छत्रःपाटलिपुत्रोदितिर्दितिःश्रीशः । क्षौरेस्मर-
णादेषांदोषानश्यन्तिनिःशेषाः १२

१३१ अथरोगोत्पत्तौनक्षत्रफलम् अश्विन्यांरोगोत्पत्तौएकाहंनवदिनानि
वापञ्चविंशतिदिनानिवापीडा १ भरण्यामेकादशैकविंशतिर्वामासंवामृत्युर्वा
२ कृत्तिकायां दशनववैकविंशतिर्वा ३ रोहिण्यांदशवानववासप्तवात्रीणिवा-
हानि ४ मृगेपञ्चनववात्रिंशद्वा ५ आर्द्रायांमृत्युर्वादशाहंवामासंवा ६ पुन-
र्वसौसप्तनववामृत्युर्वा ७ पुष्येसप्तवामृत्युर्वा ८ आश्लेषायांमृत्युर्विंशतिस्त्रिं-
शद्वानववादिनानिपीडा ९ मघायांमृत्युर्वासार्धमासंवामासंवाविंशतिदिना-
निवापीडा १० पूर्वाफल्गुन्यांमृत्युर्वाब्दंमासंवापीडापञ्चदशवाषष्टिर्वादि-

---

१ ज्वरपीडापरिहारायशांतयः शान्तिसारे। नीलोत्पलपुष्पैःपूजा । गुग्गुलुर्धूपः । क्षीरल-
ड्डुकंनैवेद्यम् । देवस्यत्वेतिपूजामंत्रः। क्षीरिवृक्षसमित्प्रधानद्रव्यम् । गायत्र्याष्टशतंहुत्वादध्यो-
दनवलिंहरेत् ॥२ गुडापूपंनैवेद्यं । कृष्णसुरभिपुष्पम् । महिषाक्षोधूपः । त्र्यंबकमितिपूजामंत्रः।
घृतमधुतिलाहोमद्रव्यम् । गायत्र्याष्टोत्तरशतंयमायहुत्वा एकविंशतिदिनांतेसुखीस्यात् ॥ ३
घृतौदनंनैवेद्यम् । यूथिकापुष्पपूजा । सर्पिर्धूपः । पुनंतुमांदेवजनाइतिपूजामंत्रः । सावित्र्याष्टो-
त्तरशतंदध्योदनंचहुत्वाहुतशेषेणवलिंहरेत् ॥ ४ क्षीरान्नंनैवेद्यम् । कमलपुष्पपूजा । सर्ज-
रसोधूपः । नमोब्रह्मणइतिपूजामंत्रः । घृतंसर्वधान्यानिचहोमद्रव्यम् । सावित्र्याष्टोत्तरश-
तंहुत्वाक्षीरान्नेनप्रजापतयेवलिंदद्यात् ॥ ५ पायसंनैवेद्यं । कुमुदोत्पलपुष्पपूजा । दशांगोधूपः ।
नवोनवइतिपूजामंत्रः । मुद्गतिलपंचगव्यंहोमद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वामुद्गतिलैश्चं-
द्रायवलिंदद्यात् ॥ ६ सोहालकंनैवेद्यम् । धत्तूरपुष्पपूजा । अगरुर्धूपः । नमःशंभवेतिपू-
जामंत्रः । मध्वाज्यंहोमद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वापायसान्नेनरुद्रायवलिंदद्यात् ॥ ७
गुडौदनंनैवेद्यम् । मल्लिकापुष्पपूजा । मलयजोधूपः । अदितिर्द्यौरितिपूजामंत्रः । घृतत-
ण्डुलाः प्रधानद्रव्यम् । गायत्र्याष्टोत्तरशतंहुत्वाअदितयेगंधमाल्यौदनैर्वलिंदद्यात् ॥ ८ ख-
ण्डमण्डकानैवेद्यम् । मल्लिकासरोरुहंचपुष्पम् । गुग्गुलुर्धूपः । बृहस्पतेअतीतिपूजामंत्रः ।
घृतपायसंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागन्धमाल्यौदनैर्बृहस्पतेर्वलिंदद्यात् ॥ ९ पायसं
नैवेद्यम् । अतसीपुष्पपूजा । घृतमण्डोधूपः । मधुवाताइतिपूजामंत्रः । दधिमध्वाक्तकृ-
सरान्नंद्रव्यम् । गायत्र्याष्टोत्तरशतंहुत्वासक्त्वन्नेननागायवलिंदद्यात् ॥ १० घृतपूरकं-
नैवेद्यम् । चंपकपुष्पपूजा । गुग्गुलुर्धूपः । पितुंनुस्तोषमितिपूजामंत्रः । घृतमधु-
मिश्रतिलाक्षतवटपत्राणिद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वातिलैःपितृभ्योवलिंदद्यात् ॥

नानि ११ उत्तरायांसप्तविंशतिःपञ्चदशसप्तवादिनानि १२ हस्तेमृत्युरष्टवानववासप्तवापञ्चदशवाहानि १३ चित्रायांपक्षमष्टवादशवाएकादशवाहानि १४ स्वात्यां मृत्युर्वैकद्वित्रिचतुःपञ्चमासैर्वादशदिनैर्वारोगनाशः १५ विशाखायांमासंवापक्षंवाष्टदिनंविंशतिदिनंवापीडा १६ अनुराधायांदशरात्रमष्टाविंशतिरात्रं वा १७ ज्येष्ठायांमृत्युर्वापक्षंवामासंवैकविंशतिरात्रंवापीडा १८ मूलेमृत्युःपक्षंनवरात्रंविंशतिरात्रंवापीडा १९ पूर्वाषाढायांमृत्युर्वाद्वित्रिषडादिमासैर्विंशतिदिनैःपक्षेणवारोगनाशः २० उत्तराषाढायांसार्धमासंविंशतिरात्रंवामासंवा २१ श्रवणेपञ्चविंशतिर्दशवाएकादशवाषष्टिर्वाहानि २२ धनिष्ठायांदशरात्रंपक्षंमासंत्रयोदशरात्रंवा २३ शततारकायांद्वादशैकादशवा २४ पू-

---

११ रक्तमाल्यौदनंनैवेद्यम् । विल्वफलधूपः । अर्यमणंनुदेवमितिपूजामंत्रः । घृतप्रियंगवःद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वा गंधपुष्पेणसूर्यायवलिंदद्यात् ॥ १२ कृसरंनैवेद्यम् । श्वेतकरवीरपूजा । विल्वफलधूपः । यन्मेतिमंत्रः । तिलमाषसर्पिर्व्रीहियवद्रव्यम् । सावित्र्याष्टोत्तरशतं हुत्वातैरेवार्यम्णेवलिंदद्यात् ॥ १३ अपूपंनैवेद्यम् । रक्तकरवीरपूजा । दशांगोधूपः । उदुत्यमितिमंत्रः । दधिघृतंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणवालिंदद्यात् ॥ १४ मोदकंनैवेद्यम् । जपापुष्पपूजा । दशांगोधूपः । चित्रंदेवानामितिमंत्रः । जलमिश्रघृतंचित्रौदनंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वात्वष्ट्रेघृतमिश्रमुद्गैर्वलिंदद्यात् ॥ १५ दध्योदनंनैवेद्यम् । दमनकपुष्पपूजा । श्वेतागुरुर्धूपः । सनःपितेवेतिमंत्रः । घृताक्तयवाद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणवायवेवलिंदद्यात् ॥ १६ गुडकंनैवेद्यम् । वन्धूकपुष्पपूजा । देवदारुर्धूपः । शंनइंद्राग्नी इतिपूजामंत्रः । दुग्धौदनघृतंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वापयोमिश्रितैर्गन्धमाल्यैरिंद्राग्निभ्यांवलिंदद्यात् ॥ १७ पायसाज्यंनैवेद्यम् । आरक्तपुष्पं । चंदनंधूपः । कर्पूरदीपः । मित्रस्यचर्षणीधृतइतिपूजामंत्रः । घृताक्तसूरणकंदंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वामधुशर्करापायसघृताक्तमाषान्नंमुद्गगंधपुष्पसहितंमित्रायवलिंदद्यात् ॥ १८ चित्रौदनंनैवेद्यम् । पटोलीपुष्पपूजा । कर्पूरागरुर्धूपः । इंद्रंवोइतिपूजामंत्रः । घृताक्तसूरणकंदंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणेंद्रायवलिंदद्यात् ॥ १९ मत्स्यमांससुरापोलिकानैवेद्यम् । रक्ताशोकपुष्पपूजा । मेषशृंगोधूपः । मोषुणःपरेतिपूजामंत्रः । सघृतकंदमूलंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वानिर्ऋतयेपायसान्नेनवलिंदद्यात् ॥ २० मण्डकानैवेद्यम् । कल्हारपुष्पपूजा । मनःशिलाधूपः । आपोहिष्ठेतिमंत्रः । रक्तशालिर्द्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वा वरुणायपायसान्नेनवलिंदद्यात् ॥ २१ पंचभक्षंनैवेद्यम् । पंचवर्णपुष्पैःपूजा । लाक्षाधूपः । विश्वेदेवासआगतइतिमंत्रः । घृतसल्लकीखंडानिद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वाविश्वेभ्योदेवेभ्यःपायसान्नेनवलिंदद्यात् ॥ २२ क्षीरशर्कराघृतमण्डकोनैवेद्यम् । जातीपुष्पपूजा । दशांगोधूपः । अतोदेवाइतिमंत्रः । रक्ततंदुलद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणविष्णवेवलिंदद्यात् ॥ २३ पायसंनैवेद्यम् । शतपत्रपुष्पपूजा । गुग्गुलुर्धूपः । त्रायंतामिहदेवाइतिमंत्रः । विल्वोदुंबराश्वत्थसमिधोद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वाघृतमिश्रमुद्गैर्वसुभ्योवलिंदद्यात् ॥ २४ घृतमण्डकानैवेद्यम् । जलोद्भवपूजा । कर्पूरागरुर्धूपः । इमंमेवरुणेतिमंत्रः । अश्वत्थस-

र्वाभाद्रपदायांमृत्युर्वाद्वित्र्यादिमासंवादशरात्रंवा २५ उत्तराभाद्रायांसार्धमासंपक्षंसप्ताहंदशाहंवा २६ रेवत्यांज्वराद्युत्पत्तौदशाहमष्टाविंशतिरात्रं वापीडा २७ जन्मनक्षत्रेजन्मराशौअष्टमचन्द्रेरोगोत्पत्तौमृत्युः २८ अर्कादिवारेक्रमेणमघाद्वादश्यौविशाखैकादश्यौपञ्चम्यार्द्रेतृतीयोत्तराषाढेशततारापष्ठ्यौअष्टम्यश्विन्यौपूर्वाषाढानवम्यौचेतित्रयाणांयोगेमृत्युः एवमर्कादौअनुराधाभरण्यौआर्द्रोत्तराषाढेमघाशततारेविशाखाश्विन्यौज्येष्ठामृगौश्रवणाश्लेषेपूर्वाभाद्रपदाहस्तौचेन्मृत्युयोगः अत्रोक्तास्तिथिवारनक्षत्रशांतयोविस्तृताःकार्याः येषुनक्षत्रेषुमरणमुक्तंतत्रशान्तिरावश्यकी अन्यत्रकृताकृता ॥

१३२ अथसर्वनक्षत्रसाधारणःशान्तिप्रयोगः देशंकालौसंकीर्त्यममोत्पन्नव्याधेर्जीवच्छरीराविरोधेनसमूलनाशार्थममुकनक्षत्रशान्तिंकरिष्यइतिसंकल्प्यगणेशपूजादि आचार्यंवृत्वाकुम्भोपरिपूर्णपात्रेद्वादशदलेनक्षत्रदेवताप्रतिमांसौवर्णींसंपूज्यद्वादशदलेषुसंकर्षणादिद्वादशमूर्तीर्द्वादशादित्यान्वासंपूज्यदूर्वासमित्तिलक्षीराज्यैर्गायत्र्यातत्तद्देवतायैअष्टोत्तरशतंहुत्वामरणादिपीडाधिक्योक्तौसहस्रंहुत्वादध्योदनबलिंदत्त्वाचार्यायगांप्रतिमांचदद्यादितिसंक्षेपः शान्तिमयूखादौनक्षत्रभेदेनहविर्मन्त्रबलिधूपादिभेदस्तिथिवारदेवतामन्त्रादिभेदइत्यादिविस्तरोद्रष्टव्यः कर्मविपाके जातवेदसइत्यृचोऽयुतंलक्षंवाजपोरुद्रेनमकानुवाकैःसहस्रकलशस्नानंवाविष्णौसहस्रावृत्तपुरुषसूक्तेनसहस्रघटस्नानंवाज्वरनाशकम् यद्वाश्रीभागवतस्थज्वरस्तोत्रजपः ॥

१३३ अथसर्वरोगनाशकानि रोगानुसारेणलघुरुद्रमहारुद्रातिरुद्राणांजपोभिषेकोवा विष्णुसहस्रनामस्तोत्रस्यशतंसहस्रमयुतंवाजपः सौरंजपः[1]सूर्यनमस्काराघ्यर्दानानिमुञ्चामित्वेतिसूक्तजपोऽच्युतानन्तगोविन्देतिनामत्रयजपोमृत्युंजयजपश्चरोगानुसारेणेतिसर्वरोगहराणि ज्येष्ठामूलश्रुतिस्वातीमृदुक्षिप्रपुनर्वसौ । गुरुशुक्रेन्दुवारेषुशस्तंभेषजभक्षणम् १ रिक्तायांचरलग्नेमिश्रक्षिप्रेन्द्रमूलपूर्वासु । चित्राभरणीश्रवणत्रयभेरविकुजबुधार्कजेस्नायात् २ वैधृतौचव्यतीपातेभद्रायांसंक्रमेतथा । रोगमुक्तस्नानमत्रचन्द्रताराबलंनवा ३ ॥

मिथःद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वा वरुणायपायसेनबलिंदद्यात् ॥ २५ दधिघृतंनैवेद्यम् । अर्कपुष्पपूजा । सर्वौषधिर्धूपः । शंनोअजएकपादितिमंत्रः । घृतकूष्मांडखंडंद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधमाल्यौदनैरजैकपादेबलिंदद्यात् ॥ २६ गुडसहितौदनंनैवेद्यम् । पंकजपत्राणिपुष्पं । घृतधूपः । विष्णोर्योनिमितिपूजामंत्रः । घृतयुतमाषमुद्गाद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणाहिर्बुध्न्यायबलिंदद्यात् ॥ २७ तिलतंडुलपिष्टंनैवेद्यम् । मंदारपुष्पपूजा । गुग्गुलुर्धूपः । हंसःशुचिषदितिमंत्रः । घृतान्नजलसहितकदलीफलानिचद्रव्यम् । सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पादिभिःपूष्णेबलिंदद्यात् ॥ इतिमदनरत्नेप्रोक्ताःशांतिसारेनक्षत्रशांतयः ॥

१ उद्यंनद्येतितृचमात्रजपः ॥

१३४ अथाभ्यङ्गः भद्रासंक्रमपातवैधृतिसितेज्यार्कारषष्ठ्यादिषुश्राद्धाहे प्रतिपद्द्वयेपरिहरेद्धेतुंविनाभ्यञ्जनम् । माङ्गल्यंविजयोत्सवोऽद्वदनंदीपावलीहेतवोभ्यङ्गस्याथवुधाम्वुपर्क्षेपितृभाभ्यङ्गात्पतिघ्न्यङ्गना १ अथापवादः सार्षपंगन्धतैलंचयंत्तैलंपुष्पवासितम् । द्रव्यान्तरयुतंतैलंपक्वतैलंनदुष्यति १ किंचिद्वोघृतयुक्तंवाविप्रपादरजोन्वितम् । नित्याभ्यङ्गेचनोदुष्टंतैलंनिन्द्येह्निसर्वदा २ रवौपुष्पंगुरौदूर्वांभौमवारेचमृत्तिकाम् । भार्गवेगोमयंक्षिप्त्वा तैलस्नानंसुखावहम् ३ ॥

१३५ गृहारम्भः वैशाखेफाल्गुनेपौषेश्रावणेमार्गशीर्षके । गृहारम्भप्रवेशौस्तःस्तम्भोच्छ्रायश्चशस्यते १ ज्येष्ठकार्तिकमाघांश्चशुभदान्प्राहनारदः । तृणगेहंसर्वमासेपौषेमुख्यगृहंनहि २ हस्तत्रयध्रुवमृदुधनिष्ठाद्वयपुष्यभे । रिक्ताअर्ककुजौत्यक्त्वागृहंकुर्याद्विशेदपि ३ शिलान्यासंचखातंचश्रुत्यधिक्रूरमित्रभैः आश्लेषामूलपुष्यार्कमृगान्त्यध्रुवभैरपि ४ केन्द्राष्टमेपापहीनेवेश्मकर्तुःस्थिरोदये । धनिष्ठापञ्चकेवर्ज्यःस्तम्भोच्छ्रायःसदाबुधैः ५ नेष्टानि सप्तसूर्यर्क्षादिष्टान्येकादशाष्टमात् । दशशिष्टानिनेष्टानिचक्रेस्युर्वृषवास्तुनि ६ यद्वातुर्यात्पञ्चदशात्त्रयोविंशतिसंख्यकात् । वेदाब्धिपञ्चनेष्टानिगृहारम्भप्रवेशयोः ७ स्नानपाकस्वापवस्त्रभुजीनांपशुकोशयोः । देवानांचगृहान्कुर्यात्पूर्वादौमुख्यवेश्मनः ८ उदग्दिशंध्रुवमुखाज्ज्ञात्वाप्राचींप्रसाधयेत् । कोणाध्वभ्रमकूपद्वाःपङ्कस्तम्भद्रुमामरैः ९ विद्धादुष्टाद्वार्नदोषोगृहोच्चद्विगुणान्तरे । सूत्रंभित्तिशिलान्यासंस्तम्भस्यारोपणंतथा १० आग्नेयींदिशमारभ्यकुर्यादित्याहकश्यपः । अन्यवेश्मस्थितंदारुनान्येवेश्मनियोजयेत् ११ नूतनेनूतनंकाष्ठंजीर्णेजीर्णंप्रशस्यते । द्वात्रिंशाधिकहस्तेचतृणागारेचतुर्मुखे १२ नतत्रचिन्तयेद्धीमान्गुणानायव्ययादिकान् ॥

१३६ अथगृहप्रवेशः वास्तुपूजाविधिःकार्यःपूर्वमेवप्रवेशतः । मैत्रध्रुवक्षिप्रचरमूलभैर्धनपुत्रकृत् १ वास्तुशान्तिप्रयोगोन्यतोज्ञेयः वास्तुशान्तिर्दैवेवोक्ताप्रवेशस्तुनिशिक्वचित् । गृहप्रवेशःप्रारम्भोदितमासादिकैःशुभः १ क्वचिन्माघोर्जशुक्रेषुकैश्चिदुक्तोमृदुध्रुवे । श्रेष्ठःक्षिप्रैश्चरैर्मध्योनिन्द्यस्तीक्ष्णोग्रमिश्रभैः २ त्रिषडायेखलैःसद्भिःषडष्टव्ययवर्जितैः । शुद्धेम्बुरन्ध्रेचतनौविजनुर्लग्नभाष्टमे ३ ऋक्षाणिपञ्चसूर्यर्क्षान्नेष्टान्यष्टचतुर्दशात् । शेषभानिशुभान्येवंप्रवेशेघटचक्रकम् ४ इतिवास्तुप्रकरणम् ॥

१३७ अथधनाद्यर्थगमनम् श्रुतिद्वयाश्विपुष्यान्त्यानुराधामृगहस्तभे । पुनर्वसौगोचरेष्टप्रदवारेव्रजेन्नरः १ अभिजिद्गमेश्रेष्ठंदक्षिणाशांविनाक्षणः मघाचित्रात्रयाश्लेषाभरण्यार्द्राःसकृत्तिकाः २ पूर्वाभाद्राचनेष्टाःस्युःप्रयाणेज-

न्मभंतथा । त्यजेद्रिक्तांपर्वषष्ठयष्टमीद्वादशिकास्तिथीः ३ कृत्तिकाभरणीपूर्वामघानांघटिकाःक्रमात् । एकविंशतिसप्ताथषोडशैकादशत्यजेत् ४ ज्येष्ठाश्लेषाविशाखासुस्वात्यांचापिचतुर्दश । भृगोर्मतेसंकटेऽपिसर्वांस्वातींमघांत्यजेत् ५ भरण्याःपूर्वमर्धंचचित्राश्लेषांतकोत्तरम् । वारशूलःसोमशनीप्राच्यामीज्यस्तुदक्षिणे ६ रविशुक्रौप्रतीच्यांस्यादुदीच्यांबुधमङ्गलौ । पूर्वादिदिक्षुमेषाद्याःक्रमात्त्रिश्चन्द्रराशयः ७ संमुखोदक्षिणोऽब्जःसन्पृष्ठेवामेऽतिनिन्दितः । दिशियत्रोदेतिशुक्रस्तांदिशंनव्रजेन्नरः ८ नव्रजेत्संमुखेज्ञेपिशुभपृष्ठोपिवामतः रेवतीमेषगेचन्द्रेशुक्रान्ध्यात्संमुखंव्रजेत् ९ प्रयाणेशुभाःकेन्द्र १।४।७।१० कोणेषु ९।५ शस्ताःखलारुयायषट्‌खेष्व ३।११।६।१० निष्टःशनिःखे १० । कविःसप्तमे ७ ग्लौःषडष्टान्त्यलग्ने ६।८।१२।१ विलग्नेश्वरोप्यस्तषष्ठाष्टमान्त्ये ७।६।८।१२ ॥ १ ॥ केन्द्रेवक्रीवक्रिवर्गोलग्नेवारश्चवक्रिणः । कुम्भःकुम्भनवांशश्चलग्नेत्याज्यःप्रयत्नतः २ मीनलग्नेतदंशेवायातुर्मार्गोऽतिदुःखदः । शत्रुर्लग्नभतःषष्ठंतत्पतिर्वामृतिप्रदः ३ शत्रुक्षेत्रेतदंशेवातद्दृष्टेगमनंनसत् । लग्नेस्तंगतराशिश्चजन्मराशिश्चनोशुभः ४ शशीवर्गोत्तमेलग्नेवर्गोत्तमयुतेजयः । शुक्लादितिथिवारर्क्षयोगोऽश्वैरष्टभिस्त्रिभिः ५ त्रिस्थस्तष्टोवशिष्टश्चेत्सर्वाङ्कःसार्वकामिकः । त्रिपुक्रमाद्भवेच्छून्यंदुःखदारिद्र्यमृत्युदम् ६ यद्येकस्मिन्नेवदिनेपुराद्गच्छेत्पुरान्तरम् । प्रावेशिकीकालशुद्धिस्तदाज्ञेयानयात्रिकी ७ प्रवेशान्निर्गमोनेष्टःप्रवेशोनिर्गमादपि । जिष्णोःकदापिनवमेधिष्ण्येवारेतिथौतथा ८ याम्यादिग्गमनंशय्यावितानंछादनंगृहे । नकुम्भमीनगेचन्द्रेतृणकाष्ठस्यसंग्रहः ९ तर्पिताग्निसुहृद्विप्रभार्यादिस्तृप्तिमान्व्रजेत् । स्वकीयांपरकीयांवास्त्रियंपुरुषमेववा १० ताडयित्वातुयोगच्छेद्ब्राह्मणानवमान्यच । व्याधितःक्षुधितोवाऽपितदन्ततंस्यजीवितम् ११ क्रोधंक्षौरंतथावान्तितैलाभ्यङ्गाश्रुमोचनम् । मद्यंमांसंगुडंतैलंसितान्यतिलकंतथा १२ श्वेतभिन्नंचवसनंप्रयाणेपरिवर्जयेत् । क्षौरंपञ्चदिनंदुग्धंत्रिदिनंसप्तरात्रकम् । मैथुनंचापरंतैलंमध्वाज्यंतद्दिनेत्यजेत् । रुयार्तवंबीजदानान्तंतथाकुशकुनांस्त्यजेत् १४ सुमुहूर्तेस्वयंगमनासंभवेप्रस्थानंकार्यम् प्रस्थानंनामाभीष्टवस्तुचालनम् यज्ञोपवीतकंशस्त्रंमधुचस्थापयेत्फलम् । विप्रादिःक्रमतःसर्वैःस्वर्णधान्याम्बरादिकम् १ राजादशाहंपञ्चाहमन्योनप्रस्थितोवसेत् । स्वयंगमनाद्वस्तुस्थापनाख्यप्रस्थानेर्धफलम् प्रस्थानदेशावधिः गेहाद्गेहान्तरंगर्गःसीम्नःसीमान्तरंभृगुः । बाणक्षेपंभरद्वाजोवसिष्ठोनगराद्बहिः १ प्रस्थानेपिकृतेनेयान्महादोषान्वितेदिने । प्रस्थानदिनेपिक्रोधादिकंवर्जयेत् शकुनापशकुनप्रपञ्चोऽन्यत्र इतियात्राप्रकरणम्* ॥

* अथद्वादशाब्दादूर्ध्वमवलोकनविधिः स्मृत्यन्तरे । दंपतीपितृपुत्रौचस्वसारौभ्रातरौतथा ॥ पितृव्यमातुलौचैवदौहित्रौभागिनेयकौ १ पुत्रिकापितरौचै-

वर्भगिनीपितरौतथा ॥ द्वादशाब्देव्यतीतेतुदूरदेशंगतौयदि २ एतेषामेकमेको-
पिनान्योन्यमवलोकयेत् ॥ इच्छंतिकेचिदाचार्याअन्योन्यमवलोकनम् ३ शिवा-
लयेथवातीर्थेस्नात्वाप्रज्वाल्यदीपकौ ॥ शिवंसंपूज्यविधिवद्दुभौतौदेवमध्यतः
४ धृत्वाकांस्यमयंपात्रंसजलंरत्नपूरितम् ॥ शांतिकैर्मंत्रघोषैश्चद्विजैःसहविलोक-
येत् ५ आननंचैकमेकस्यदृष्ट्वासम्यक्शिवंनमेत् ॥ ब्राह्मणेभ्योयथाशक्त्याद-
द्यात्पात्रसदक्षिणम् ६ अन्येभ्यश्चाथविप्रेभ्योयथावित्तानुसारतः ॥ तेभ्योपि
दक्षिणांदत्त्वापूजयेच्चपुनःपुनः ७ नत्वादेवंद्विजान्सूर्यमागच्छेत्स्वस्यमंदिरम् ॥
ततोव्याहृतिभिर्होमंशतमष्टोत्तरंतिलैः ८ कृत्वाथभोजयेद्विप्रान्यथावित्तानुसारतः ॥
बांधवैःसहभुंजीतसर्वारिष्टप्रशांतये ९ इत्थंयःकुरुतेमर्त्यस्तस्यारिष्टंनविद्यते ॥
आयुष्कामोनरश्चैवमकृत्वानावलोकयेत् १० पूर्वविलोकितानांतुविधिरेषउदा-
हृतः ॥ नचैवापूर्वदृष्टानामितिप्राहुर्मनीषिणः ११ पारिजाते । द्वादशाब्देव्य-
तीतेतुनकुर्याद्भ्रातृदर्शनम् ॥ पित्रोःपुत्रस्यनैवाहुर्महाहानिकरंभवेत् १ दर्शनंतु-
प्रकुर्वीतशिवंपूज्यशिवालये ॥ कांस्यपात्रंस्फोटयित्वाअंतःपटविधानतः २ मु-
खावलोकनंपश्चात्समालिंग्यविपर्ययात् ॥ एवंकृतेविधानेतुदोषशांतिर्भविष्यति ॥
सूर्यारुणसंवादेतु । गणेशमृत्युंजयविष्णुलक्ष्मीमघोरसंज्ञंचग्रहंघटेषु ॥ आवाह्यसं-
पूज्यचधान्यराशौहोमंचकुर्यादिहदेवमंत्रैः १ शिवपूजांप्रकुर्वीतप्रतिमापूजनंततः ॥
अघोरप्रतिमांदद्याद्ब्राह्मणायसदक्षिणाम् २ अनेनसहगच्छत्वंक्रीडस्वचसुखंचि-
रम् ॥ मांतथैवाधुनामुंचक्षमांकुरुममोपरि ३ शिवाग्रेतुसमागत्यकृत्वाचैवांतरेप-
टम् ॥ उभाभ्यांनारिकेलंचभङ्क्त्वाभूयोधिगम्यताम् ४ निवर्तसूक्तंजस्वादाव-
घोरद्विजपुंगवम् ॥ अघोरप्रतिग्राहिणंब्राह्मणमित्यर्थः ॥ विसर्जयेत्पुनस्तंचनैवपश्ये-
त्कदाचन ५ कांस्यपात्रेघृतंकृत्वादृष्ट्वारूपंस्वकंस्वकम् ॥ तत्पात्रंब्राह्मणेदद्याद्दक्षि-
णासंयुतंततः ६ पादप्रक्षालनंकृत्वाआचम्यचयथाविधि ॥ शांतिमंत्रान्पठेत्प-
श्चात्पूजांगृह्यशिवंव्रजेत् ७ धूपदीपादिनैवेद्यतांबूलैर्दक्षिणादिभिः ॥ वस्त्रैराभर-
णैर्दिव्यैस्तोषयेच्छंकरंततः ८ शिवस्यप्रार्थनांकृत्वाजपेत्सूक्तंकनिक्रदत् ॥ प्रद-
क्षिणीभद्रचेतिपठेत्सूक्तंशिवोपरि ९ पुष्पाञ्जलिंचयुगपद्द्याच्चैवांतरंपटम् ॥ पुनः-
पुनर्नमस्कृत्यपश्चात्तंचविलोकयेत् १० प्रणामालिंगनंकुर्यात्स्वागतंक्षेमपृच्छ-
नम् ॥ ततोद्विजवराःसर्वेसूक्तानिस्वस्तिकानिच ११ पठित्वाहोमदेशंचगच्छे-
युश्चमुदान्विताः ॥ प्रतिमापूजनंकृत्वावह्नेश्चापियथाक्रमम् १२ होमशेषंसमाप्यै-
वंब्रह्माचार्यादिकान्यजेत् ॥ अभिषेकंततःकुर्युरुभयोर्मंगलंवदेत् १३ स्वस्तिश-
ब्दंतथाब्रूयुर्गांचदद्यात्पयस्विनीम् ॥ देवान्वह्निंविसृज्याथकुम्भेलक्ष्मींनिधायच

१४ आचार्यब्रह्मऋत्विग्भिर्वाद्यघोषपुरःसरम् ॥ स्वगृहंचशनैर्गच्छेत्सार्धंतेनप्र-
वासिना १५ देवानांचैवतृप्त्यर्थंकर्तव्यंद्विजभोजनम् ॥ एवंकृतेविधानेतुनस्या-
द्विघ्नंकदाचन १६ देवद्विजप्रसादेनकल्याणंस्यान्नसंशयः ॥ आयुष्यंक्षेममारो-
ग्यंपुत्रपौत्रप्रवर्धनम् १७ सौभाग्यमतुलंचैवलभेदस्यप्रसादतः ॥ आरामेपुण्य-
तीर्थेवादेवागारेथसंगमे १८ सुपवित्रनदीतीरेविधानंक्षेमदंभवेत् ॥

अथप्रयोगः सुमुहूर्तेचन्द्रताराबलान्वितेपुण्याहंवाचयित्वाचार्यब्रह्मर्त्विगा-
दीन्वृत्वादेशकालौसंकीर्त्यास्माकंसकुटुम्बानांक्षेमायुरारोग्यैश्वर्याभिवृद्ध्यर्थंसर्वत्र-
मङ्गलाभ्युदयार्थमात्मनोबन्ध्वादीनांद्वादशाब्दाधिकप्रवासस्थितिजनितपापग्रहपी-
डापरिहारार्थंवियोगग्रहशान्तिंकरिष्यइतिसंकल्प्य तदङ्गस्थण्डिलोल्लेपनकल-
शस्थापनेकरिष्यइतिसंकल्प्यदधिदूर्वामृत्पञ्चगव्यसर्वौषधीहिरण्यरत्नफलपुष्पपञ्च-
पल्लवाद्यलंकृतेषुपञ्चधान्यपुञ्जस्थितपञ्चकलशेषुतीर्थवारिणापूर्णेषुस्थापितवंशपा-
त्रोपरिअष्टदलालंकृतवस्त्रेषुगणेशमृत्युंजयविष्णुलक्ष्म्यघोरप्रतिमानामग्न्युत्तारणं-
कृत्वातत्तन्मन्त्रैःकलशावाहनपूजनस्थापनादिपूर्वकंतत्तन्मन्त्रैस्तत्तद्देवतानामावाह-
नादिपूजांकुर्यात् ततोन्वाधानंकृत्वातत्तदुद्देशेनप्रतिदैवतंदूर्वातिलाज्यचरुशर्करा-
भिरष्टसहस्रमष्टशतमष्टाविंशतिंवाहुतीर्हुत्वा अघोरमन्त्रेणाघोरायहुत्वा रुद्राभिषे-
कंकृत्वाशिवालयेंऽतःपटंधृत्वोभावपियुगपच्छिवस्यपुरतोनारीकेलफलंप्रत्येकंभङ्-
क्त्वाहोमदेशंगत्वानिवर्तध्वमितिसूक्तंजपेताम् । ततोऽघोरंप्रार्थयेताम् ॥ अघो-
रत्वंमहाकायनृणांविश्लेषकारक ॥ त्वत्क्षोभजनितंघोरंनृणांविश्लेषजंफलम् १ वि-
योगविषमाक्षस्त्वंविषमांघ्रिक्रायुध ॥ विबुद्धिर्विगतस्थायीविलापीविगताश्रयः
२ योगभ्रष्टोयोगध्वंसीयोगीयोगविघातकः । नृनार्योर्योगहन्ताचबन्धुयोगवियो-
गकृत् ३ गच्छत्यनुदिनंचोर्वीप्राणिनांक्लेशहेतवे ॥ योगविश्लेषकार्यत्वाद्वियोगं-
त्वांप्रचक्षते ४ भावियोगमहाघोरप्राणिनांक्लेशदायक ॥ शरणागतमापन्नंत्राहि-
मांशोकसागरात् ४ द्विजंसमभ्यर्च्याघोरप्रतिमांदद्यादाज्यावेक्षणंकृत्वाशांतिमंत्रा-
न्जपित्वापादौप्रक्षाल्यशिवंगंधपुष्पैस्तोषयित्वास्वस्तिनोआनोभद्राकनिक्रदत्प्रद-
क्षिणिभद्रंवदेतिसूक्तानिपठन् अंतःपटंनिष्कास्ययुगपच्छिवोपरिपुष्पाञ्जलिंदत्त्वा-
मुहुःशिवंनमस्कृत्यसंप्रार्थ्यबन्धुंविलोकयेत् ॥ तौप्रणामक्षेमालिङ्गनेकृत्वास्वागतं-
पृष्ट्वा येयज्ञेनेत्याशिषोदत्त्वाहोमशेषंसमाप्याभिषेकं कृत्वाग्न्युद्वासनंकृत्वाकुंभेलक्ष्मी-
प्रतिमांनिधायवाद्यघोषपुरःसरंब्राह्मणैःसहप्रवासिनाचसहगृहंप्रविशेत् ॥ ततो-
ब्राह्मणान्संभोज्यद्विजान्वस्त्रालंकारदक्षिणादिभिःसंतोष्यस्वस्तिभवंतोब्रुवन्त्विति-
ब्रूयात् तेंचस्वस्तिरस्त्वितिप्रत्यूचुः ॥ इतिप्रवासादागतग्रहविधानंशान्तिसारे ॥

१३८ अथगोचरप्रकरणम् । जन्मराशेःक्रूरचन्द्रास्त्रिषट्दशमगाःशुभाः । सप्ताद्यगश्चापिचन्द्रःशुक्लेद्विनवपञ्चसु १ बुधोन्यन्त्यसमे २ । ४ । ६ । ८ । १० । जीवोद्विपञ्चनवसप्तसु । जन्मादिपञ्चसुतथानवाष्टद्वादशेभृगुः २ एकादशेसर्वखेटाःशुभाःस्युरितिसंग्रहः । जन्मसंपद्विपत्क्षेमंप्रत्यरिःसाधिकावधः । मैत्रातिमैत्राःस्युस्ताराह्निरावृत्त्यास्वजन्मभात् १ क्रमतःसूर्यादिबलंनृपदर्शनसर्वकार्ययुद्धेषु । शास्त्रकरग्रहयात्रादीक्षासूह्यंविशेषेण २ अनिष्टसूर्यादीनांदानानिद्वितीयपरिच्छेदान्ते ॥

१३९ अथपल्लीसरठफलम् । [1]दक्षांगोदरनाभिहृत्सुपतितापल्लीवरांगेहनुंमुक्त्वानुःशुभदास्त्रियाःफलमिदंवामेतरव्यत्ययात् । इत्याहुःसरठप्ररोहणफलंपातेऽन्यथैकेवृथापल्ल्यारोहणकेऽपिवस्त्रसहितंस्नात्वाचरेच्छान्तिकम् १ ॥

१४० अथपल्लीसरठशान्तिः तयोःस्पर्शमात्रेस्नानंकृत्वापञ्चगव्यंप्राश्याज्यमवलोक्याशुभनाशार्थंशुभवृद्ध्यर्थंवाशान्तिःकार्या पल्ल्याःसरठस्यवाहेम्नाप्रतिमांकृत्वारक्तवस्त्रेणसंवेष्ट्यसंपूज्यकलशेरुद्रंसंपूज्यमृत्युंजयमन्त्रेणखादिरसमिद्भिरष्टोत्तरशतंतिलैर्व्याहृतिभिरष्टोत्तरसहस्रंशतंवाहुत्वास्विष्टकृदाद्यभिषेकान्तेस्वर्णवस्त्रतिलदानम् अथकपोतप्रवेशमधुवल्मीकोत्पत्तिपिङ्गलास्वरकाकवैकृतग्राम्यारण्यादिमृगपक्षिविकारेशान्तिः देवाःकपोतइतिपञ्चर्चंसूक्तंसहस्रंशतंवाजपित्वा यतइन्द्रभयामहेस्वस्तिदाविशरुयम्बकमितिमन्त्रैर्हुत्वा
कपोतप्रवेशां- व्याहृतिभिरष्टोत्तरशतंतिलहोमंकुर्यात् अथवापञ्चविप्रैःक्रमेण-
दिशान्तिः. देवाःकपोतइतिसूक्तंसुदेवोअसीत्यृचंकनिक्रदद्दितिशाकुन्तसूक्तंनमोब्रह्मणेनमोइतिमन्त्रंचसहस्रादिसंख्ययाजप्त्वोपनिषदश्चपठित्वाव्याहृतिभिस्तिलहोमंकुर्यात् ॥

१४१ अथकाकस्पर्शमैथुनदर्शनादिशान्तिः संकल्पाग्निप्रतिष्ठापनान्तेकुम्भेसौवर्णमिंद्रंलोकपालांश्चसंपूज्याग्नौचरुंश्रपयित्वापलाशसमिच्चर्वाज्यव्रीहिभिःप्रत्येकमष्टोत्तरसहस्रंशतंवा यतइन्द्रेतिमन्त्रेणहुत्वालोकपालेभ्यस्तैरेद्रव्यैर्दशकृत्वोहुत्वा लोकपालबलिंकुम्भाग्रेवायसेभ्योबलिमैन्द्रवारुणेतिमन्त्रेणदत्वायजमानोभिषेकान्तेशतंदशवाविप्रान्भोजयेत् घरट्टोलूखलमुसलदृषदासनमञ्चकादेरकस्मात्स्फोटनेघृताक्तमधुयुताश्वत्थसमिधःप्रजापतयेहुत्वागायत्र्याष्टोत्तरसहस्रेणाभिमन्त्रयेत् ॥

---

१ पुरुषस्य दक्षिणाङ्गेषु उदरनाभिहृदयेषुमस्तकेचपल्लीपतनंशुभकारकं वामांगेषुहनौचअशुभमित्यर्थः । इदंफलं स्त्रियाः वामेतरव्यत्ययात् वामाङ्गदक्षिणाङ्गविपर्यासाद्बोध्यम् । वामाङ्गेषुशुभं दक्षिणांगेष्वशुभमित्यर्थः । अन्यत्सुगमम् ॥

१४२ नानाविधदिव्यभौमान्तरिक्षोत्पातेषुशांतिः संकल्पादिकृत्वाकुम्भे-इन्द्ररुद्रौसंपूज्ययतइन्द्रस्वस्तिदाविशस्पतिःअघोरेभ्योथेतिमन्त्रैःसमिदाज्यचरु-व्रीहितिलान्प्रतिद्रव्यमष्टोत्तरशतंहुत्वाव्याहृतिभिःकोटिहोमंलक्षहोममयुतहो-मंतत्पादहोमंवातिलैर्वित्तानुसारेणनिमित्तानुसारेणचसप्तरात्रंत्रिरात्रमेकरात्रं वाकृत्वासूर्यगणेशक्षेत्रपालदुर्गामन्त्राणांजपंकृत्वापायसादिनाब्राह्मणभोजनं कार्यम् यद्वाचण्डीसप्तशतीजपः अथवारुद्रैर्जपोभिषेकोवा अश्वत्थप्रदक्षिणा-शिवपूजागोविप्रपूजादिवेतिनानोत्पातसामान्यशान्तयः* ॥

---

अथ दीपपतनादिशांतिः—सउदीचींदिशमन्वावर्ततेऽथयदास्य कनक-रजतवस्त्रवैडूर्यमणिमौक्तिकवियोगोभवेदारंभावाविपर्यंते भार्यावाविरज्यन्ते मि-त्राणिवाविरज्यंते काकमैथुनंवापश्येतारिष्टानिवावयांसि गृहमध्येआसते व-ल्मीकं मधुछत्राकं वोपजायते शकटस्तिष्ठतिवायसकपोतान्यविहंगशशमृग-प्रवेशोगौर्मृगोवागृहमारोहेद्बलाकागृहमारोहेच्छुष्कवृक्षाःप्ररोहंति गृहमध्येदूर्वाः प्ररोहंतितैलंस्थीयते रात्राविंद्रधनुर्दृष्ट्वा दिवाश्वेतवायसंमंडूकोग्निंप्रविशतिसरठोमूर्ध्नि पतति पल्लीपतति प्रज्वलद्दीपःपतति सर्पोद्वारेण निष्क्रामति इत्येवमादीनि तान्ये-तानिवैश्रवणदैवत्यान्यद्भुतप्रायश्चित्तानिभवंत्यभित्यंदेवंसवितारमोण्योरितिस्थाली-पाकमष्टशतंहुत्वापंचभिराज्याहुतीर्जुहोति वैश्रवणाययक्षाधिपतयेहिरण्यपाण-यईश्वरायसर्वोत्पातशमनायस्वाहेतिमहाव्याहृतिभिश्चशंतातीयंजपेत् ॥ इतिगृ-ह्यपरिशिष्टम् ॥

अथ दीपपतनशांतिप्रयोगः—ममगृहेप्रज्वलितदीपपतनसूचितसर्वारिष्टशां-त्यर्थं वैश्रवणप्रीतिद्वाराशुभतासिध्यर्थंच प्रज्वलद्दीपपतनशांतिंकरिष्ये ॥ तदंगग-णपतिपूजनादिस्थापितकलशे प्रधानदेवतास्थापनेतु अभित्यंदेवंवैश्रवणःसप्तयक्षा अष्टौ ॥ वैश्रवणावाहनेवि० ॥ ॐअभित्यंदेवंसवितारमोण्योः कविक्रतुमर्चानि-सत्यसवंरत्नधामभिप्रियंमतिंकविं ॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्य-पाणिरमिमीतसुक्रतुःकृपास्वः ॥ इतिमंत्रेण वैश्रवणमावाह्य गणपतिं दुर्गां क्षेत्र-

---

१ उत्पातउपसर्गअद्भुतंचेतिपर्यायाः । तल्लक्षणंवसिष्ठसंहितायाम् । अन्यत्वंप्रकृतेर्यत्त-दसावुत्पातसंज्ञकः ॥ अधर्मतस्त्वसत्याच्चनास्तिक्यादतिलोभतः ॥ १ ॥ अनाचारान्नृणांनि-त्यमुपसर्गःप्रजायते ॥ तद्भेदस्तत्रैव दिव्यांतरिक्षक्षितिजाविकाराघोररूपिणः ॥ ग्रहर्क्षजाः केतवश्चउत्पातादिव्यसंज्ञकाः ॥ १ निर्घाताःपरिवेषोल्कापुरंदरधनुर्ध्वजाः ॥ एवमाद्यामहो-त्पाताअंतरिक्षाह्वयाःस्मृताः ॥ २ ॥ उत्पद्यतेक्षितौयचस्थावरंवाथजंगमम् ॥ तदेकदेशिकं भौमउत्पातःपरिकीर्तितः ॥ ३ ॥ भौमाःस्युस्तुच्छफलदाअंतरिक्षास्तुमध्यमाः ॥ संपूर्णफल-दादिव्यावर्षादर्धात्तदर्धतः ॥ ४ ॥ इतिशांतिसारे ॥

पालं वास्तोष्पतिंच नाममंत्रैरावाह्य पूजयेत् ॥ अन्वाधानेतु चक्षुषीआज्येनेत्यंते अत्रप्रधानं वैश्रवणं अभित्यंदेवमित्यृचाचरुद्रव्येण अष्टोत्तरशतसंख्याकाहुतिभिः गणपतिचतुष्टयं एकैकयाहुत्याआज्येन वैश्रवणं यक्षाधिपतिं हिरण्यपाणिं ईश्वरं सर्वोत्पातशमनंच एकैकयाज्याहुत्या महाव्याहृतिभिश्च तत्तद्देवताः एकैकयाहुत्याआज्येन शेषेणस्विष्टकृतमित्यादि आज्यभागांते अन्वधानानुसारेणदेवतोद्देशेनद्रव्यत्यागं कुर्यात्ततः वैश्रवणंअभित्यंदेवमितिमंत्रेण अष्टोत्तरशतंचरुद्रव्येणहुत्वा गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिंच नाममंत्रेणएकैकमाज्याहुतिं हुत्वा तथैव वैश्रवणाय यक्षाधिपतये हिरण्यपाणये ईश्वराय सर्वोत्पातशमनाय इतिनमोंतैः नाममंत्रैः आज्याहुतीर्हुत्वा भूरग्नयेइत्यादि चतुर्भिः महाव्याहृतिमंत्रैश्चतस्रः आज्याहुतीर्जुहुयात् ततः स्विष्टकृदादिप्रायश्चित्तहोमांते दिग्बलिदानं वैश्रवणायबलिदानंचकृत्वामहाबलिदानंकुर्यात् ततःपूर्णाहुत्यादिहोमशेषं समाप्य अभिषेकांतेआचार्यपूजादेवताविसर्जनपीठदानांतेशंतातीयसूक्तानिजपेत् ॥ सर्वेषामसंभवेआनोभद्राःशंनइंद्राग्नी इत्यादीनि जपंति ॥

*"अथमहामारीशांतिः । हेमाद्रौगर्गः । रुद्रप्रकोपजोयस्माज्जनमारःप्रवर्तते ॥ तस्मात्प्रसादयेद्यत्नाद्देवदेवंमहेश्वरम् १ गाणपत्येनविधिनाअथर्वशिरसातथा ॥ धामलेनविधानेनकुर्याद्देवप्रसादनम् २ शिवसूक्तमुमासूक्तंजपेच्चशतरुद्रियम् ॥ बल्योपहारान्विविधांश्चत्वरेषुनिवेदयेत् ३ आवाहयित्वासगणंरुद्रंरात्रावहस्सुच ॥ त्र्यंबकेनैवमन्त्रेणहोमस्तत्रप्रकल्पयेत् ४ समिधोब्रह्मवृक्षस्यजुहुयाच्चसहस्रकम् ॥ साज्यंचपायसंचैवसहस्रंजुहुयात्सुधीः ५ सहस्रंबिल्वपत्रैश्चत्वविच्छिन्नैर्द्विजोत्तमः ॥ जुहुयात्क्षीरसर्पिश्चतथाचतिलसर्पिषा ६ ब्राह्मणान्भक्ष्यभोज्यैश्चदक्षिणाभिश्चतोषयेत् ॥ प्रसादितेततोरुद्रेजनमारोनिवर्तते ७ नह्येषनानादैवत्यैर्विविधैश्चान्यकर्मभिः ॥ बलाच्छमयितुंशक्तोरुद्रकोपसमुत्थितः ८ तस्मात्प्रसादयेद्यत्नैर्हितायजगतोभवम् ॥ शिवंप्रजानांभवतियदासप्रीयतेशिवः ९ उपोषितोनृपःस्नातःशुक्लवस्त्रःसमाहितः ॥ आत्मरक्षांस्वयंकृत्वाततःशांतिंप्रयोजयेत् १० इतिजनमारीशांतिः ॥ हेमाद्रौमदनरत्नेनृसिंहपुराणे ॥ अनावृष्टिमहामारीज्वररोगभयेतथा ॥ नरसिंहंसमाराध्यब्राह्मणैर्वेदपारगैः ॥ कारयेल्लक्षहोमंतुग्रामेयश्चनराधिपः ॥ नृसिंहमन्त्रेणहोमः । सुश्रुते स्थानत्यागाज्जपाद्धोमान्महामारीप्रशाम्यति ॥ आथर्वणेतुरौद्रीशांतिरुक्ता इतिशान्तिसारशान्तिरत्नयोः ॥

अथमहामारीशान्तिप्रयोगः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यएत-
द्ग्रामेराजाद्यपचारेणब्रह्मस्वहरणगुरुद्रोहब्रह्महत्यास्त्रीवधस्वस्वधर्मानाचरणादिभिश्च
रुद्रकोपोत्थितोत्थिष्यमाणजनमारणदारुणरोगोपशान्तिपूर्वकमेतद्ग्रामनिवासिनां
सर्वेषांलोकानांक्षेमायुरारोग्यैश्वर्याभिवृद्धिद्वाराश्रीमहारुद्रप्रीत्यर्थं सग्रहमखांजनमा-
रशान्तिंकरिष्यइतिसंकल्प्य गणपतिपूजनस्वस्तिवाचनमातृकापूजननान्दीश्राद्धा-
चार्यब्रह्मसदस्यर्त्विग्वरणान्तंकुर्यात् ॥ ततोवस्त्रगन्धादिभिस्तेषांपूजनम् तत-
आचार्यः पवित्रपाणिः देशकालौसंकीर्त्य यजमानानुज्ञयाचार्यकर्मकरिष्यइति-
संकल्प्य पुरुषसूक्तजपादिनात्मतनुंपावयित्वायदत्रसंस्थितमितिप्रागादिदिक्षुप्राद-
क्षिण्येनसर्षपान्विकीर्य शुचीवइतितृचेन पञ्चगव्येनतथैवप्रोक्ष्यापोहिष्ठेतितृचे-
नशुद्धाभिरद्भिस्तथैवप्रोक्ष्यकृताञ्जलिःस्वस्त्ययनंतार्क्ष्यमितिमन्त्रद्वयेनदेवतांसंप्रार्थ्य
महारुद्रप्रतिमायाअग्न्युत्तारणंप्राणप्रतिष्ठांचकृत्वाकलशस्थापनंकुर्यात् ॥ तद्यथा
महीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसमितिद्रोणपरिमितव्रीहिभिस्तत्रराशिंकृत्वा आ-
कलशेष्विति कलशंसंस्थाप्य इमंमेगंगइतितीर्थजलेनापूर्यगन्धद्वारामितिगन्धंया-
ओषधीरितिसर्वौषधीः ओषधयःसमितियवान् हिरण्यरूपइतिहिरण्यम् स्योना-
पृथिवीतिसप्तमृदः याःफलिनीरितिपुष्पफलानि सहिरत्नानीतिपञ्चरत्नानि का-
ण्डात्काण्डादितिदूर्वाः अश्वत्थेवइतिपञ्चपल्लवान् ॥ युवासुवासाइतिवाससासंवे-
ष्ट्य पूर्णादर्वीतिपूर्णपात्रंतत्रनिधाय तत्रवस्त्रंचंदनादिनाकृताष्टदलंन्यसेत् तत्र-
स्थापितप्रतिमायां महारुद्रं त्र्यम्बकंयजामहइतिमन्त्रेणावाह्यषोडशोपचारैःसंपूज्य-
कुम्भस्यपश्चिमतः कुण्डेस्थण्डिलेवा वरदनामानमग्निं प्रतिष्ठाप्य चत्वारिशृ-
ङ्गेतिध्यात्वास्थण्डिलादीशान्यांवेद्यांपीठेवा नवग्रहाणां तदङ्गदेवतानांच तत्त-
न्मन्त्रैरावाहनपूजनादिकृत्वातदीशान्यांधान्योपरिमहीद्यौरित्यादिनाकलशंसंस्थाप्य
तत्रवरुणमावाह्यसंपूज्यकलशस्यमुखइत्यादिभिःकलशमभिमन्त्र्यदेवदानवइत्या-
दिभिः कलशंसंप्रार्थ्यान्वाधानंकुर्यात् तत्रप्रधानकीर्तनेविशेषः आदित्यादिग्र-
हान्प्रत्येकंप्रतिद्रव्यमेतत्संख्याभिःसमिच्चर्वाज्याहुतिभिः अधिदेवताः प्रत्यधि-
देवताश्चैतत्संख्याकाभिःसमिदाद्याहुतिभिः विनायकाद्यादेवता एतत्संख्याहु-
तिभिः श्रीमहारुद्रंप्रत्येकं सहस्रसंख्याकाभिः पालाशीसमित्साज्यपायसबिल्व-
पत्रक्षीरयुतसर्पिर्घृताक्ततिलाहुतिभिर्यक्ष्ये शेषेणस्विष्टकृतमित्यादि ततआज्यसं-
स्कारःआज्येनसहगृहसिद्धान्नस्यपायसादीनांचपर्यग्निकरणम् स्रुक्स्रुवसंमार्गान्ते
गृहसिद्धान्नपायसादीन्यासादितस्थालीष्वादायाग्नावधिश्रित्याभिघारणादिबर्हिष्या-

सादनान्तंकुर्यात् अर्कादिसमिधःपायसबिल्वपत्रक्षीरसर्पिर्घृताक्ततिलांश्चतत्रैवा-साद्याग्न्यर्चनाद्याज्यभागान्तेयजमानोन्वाधानानुसारेणत्यागंकुर्यात् ततः सर्त्विगाचार्योऽर्कादिसमिधोदधिमध्वक्ताश्चर्वाहुतीराज्याहुतीश्चसंकल्पानुसारिसंख्याकाज्जुहुयात् तादृशसंख्याकाएवपलाशसमिदादिहविःपञ्चकाहुतीर्जुहुयात् तत्र दधिमधुघृताक्ताभिस्तिसृभिर्दूर्वाभिरेकाहुतिःकार्या तथैवतिसृभिर्दर्भैरेकाहुतिः एवंहोमंकृत्वा स्विष्टकृदादिप्रायश्चित्तहोमान्तंकर्मसमाप्यदिक्पालादिभ्यः सदीपमाषभक्तबलिं यजमानद्वाराकारयेत् स्वयंवाकुर्यात् तत्रलोकपालेभ्योग्रहेभ्यो विनायकादिसप्तभ्यस्तत्तन्मन्त्रैर्बलिंदत्त्वा त्र्यंबकमितिमन्त्रेणमहारुद्रायबलिंसमर्प्य क्षेत्रपालायक्षेत्रस्यपतिनेतिमन्त्रेणबलिंदद्यात् ततःशूद्रादिनाबलिनिनयनेकृते शान्तापृथिवीतिभुवंप्रोक्ष्यसयजमानआचार्यः प्रक्षालितपाणिपाद आचान्तः पूर्णाहुतिंहुत्वापरिस्तरणविमोकादिपर्युक्षणान्तंकुर्यात् ततःसर्त्विगाचार्यः प्राङ्मुखंयजमानं समुद्रज्येष्ठाइत्यादिमन्त्रैरभिषिञ्चेत् ततोभिषिक्तोयजमानः स्नात्वाभिषेककालीनवाससीपरित्यज्याहतशुक्लवासांसिपरिधायाचार्येणविभूतिधारणादियस्यस्मृत्यन्तंकर्मणिकृतेऽग्नेःपश्चादुपविश्यदक्षिणतःपत्नीमुपवेश्यविभूतिंधृत्वाऽऽचार्यादीन्संपूज्याचार्यायधेनुंतन्निष्क्रयंवाऽन्येभ्यऋत्विग्भ्यः सुवर्णंतन्निष्क्रयंवादद्यात् तत आचार्येणस्थापितदेवतानामुत्तरपूजनेकृतेतद्धस्तेनैवउत्तिष्ठेतिमन्त्रेणविसर्जनेजातेसोपस्करग्रहपीठंमहारुद्रपीठंचतद्धस्तेप्रतिपाद्याग्निपूजान्ते गच्छगच्छेत्यग्निंविसृज्य कर्माङ्गदेवताप्रीत्यर्थं ब्राह्मणभोजनंसंकल्प्य भूयसींदक्षिणांचसंकल्प्यशान्तिसूक्तपाठंकारयित्वाकर्मसंपूर्णमस्त्वितिवाचयित्वापरमेश्वरार्पणंकुर्यात् इतिगुर्जरोपाह्वबालकृष्णोपाध्यायसूनुभालचन्द्रोपाध्यायविरचितः सग्रहमखजनमारशान्तिप्रयोगःसंपूर्णः ॥"

१४३ अथगायत्रीपुरश्चरणप्रयोगः देशकालौसंकीर्त्यकरिष्यमाणगायत्रीपुरश्चरणेऽधिकारसिद्ध्यर्थंकृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्येइतिसंकल्प्य होमादिप्रत्याम्नायविधिनाकृच्छ्राण्यनुष्ठायामुकशर्मणोममगायत्रीपुरश्चरणेऽनेनकृच्छ्रत्रयानुष्ठानेनाधिकारसिद्धिरस्त्वितिविप्रान्वदेत् विप्राअधिकारसिद्धिरस्त्वितिब्रूयुः ततःकरिष्यमाणपुरश्चरणाङ्गत्वेनविहितंगायत्रीजपादिकरिष्येइतिसंकल्प्यस्वयंविप्रद्वारावाकुर्यात् तद्यथा सप्रणवव्याहृतिकगायत्र्याअयुतंजप्त्वाआपोहिष्ठेतिसूक्तंएतोन्विन्द्रमितितिस्रःऋतंचेतिसूक्तंस्वस्तिनइत्याद्याःस्वस्तिमतीःस्वादिष्ठयेत्याद्याःपावमानीश्चसर्वाःप्रत्येकं दशवारंस्वयमन्यद्वारावाजपित्वा तत्सवितुरित्यस्याचार्यमृषिंविश्वामित्रंतर्पयामि गायत्रीछ-

न्दस्त० सवितारंदेवतां० इतितर्पणंकृत्वारुद्रंनमस्कृत्यकद्रुद्रायेत्यादीनिरुद्रसूक्तानिजपेत् ततोदिनान्तरेदेशकालौसंकीर्त्यममसकलपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंचतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणंस्वयंविप्रद्वारावाकरिष्ये तदङ्गत्वेनस्वस्तिवाचनं मातृकापूजनंनान्दीश्राद्धं विप्रद्वाराजपेजपकर्तृवरणंचकरिष्यइतिसंकल्पः संकल्पस्यापि ऋत्विक्कर्तृकत्वेऽमुकशर्मणोयजमानस्यसकलपापक्षयेत्यादियजमानानुज्ञयाकरिष्ये एवंपूर्वत्रापिसंकल्पऊह्यः नान्दीश्राद्धान्तेसविताप्रीयतामिति गायत्रीपुरश्चरणेजपकर्तारंत्वांवृणेइतिविप्रमेकैकंवृणुयात् वस्त्रादिभिःपूजयेत् अथनित्यकर्म एकैकोविप्रः स्वयंवाकुशाद्यासनोपविष्टःपवित्रपाणिराचम्यप्राणानायम्यदेवताःप्रार्थयेत् सूर्यःसोमोयमःकालःसंध्येभूतान्यहःक्षपा । पवमानोदिक्पतिर्भूराकाशंखेचरामराः १ ब्रह्मशासनमास्थायकल्पध्वमिहसंनिधिम् १ इति ततोदेशकालौसंकीर्त्यप्रत्याह्निकजपंसंकल्प्य गुरवेनमः गणपतये० दुर्गायै० मातृभ्यो० इतिनत्वात्रिःप्राणानायम्य तत्सवितुरितिगायत्र्याविश्वामित्रऋषिःसवितादेवतागायत्रीछन्दः जपेवि० विश्वामित्रऋषयेनमःशिरसि गायत्रीछन्दसेनमोमुखे सवितृदेवतायैनमोहृदि इतिन्यस्य तत्सवितुरङ्गुष्ठाभ्यां० वरेण्यंतर्जनी० भर्गोदेवस्यमध्यमा० धीमह्यनामिका० धियोयोनःकनिष्ठिकाभ्यां प्रचोदयात्करतलकरपृष्ठाभ्यांनमइतिकरन्यासंकृत्वैवंहृदयादिषडङ्गन्यासंकुर्यात् पूर्वोक्तरीत्यासंस्कृतांजपमालांपात्रेनिधायसंप्रोक्ष्य ॐमहामायेमहामालेसर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मांसिद्धिदाभव १ इतिप्रार्थ्य ॐअविघ्नंकुरुमालेत्वमितितामादायमन्त्रदेवतांसवितारंध्यायन्मन्त्रार्थंस्मरन्मध्यंदिनावधिजपेत् अतित्वरायांसार्धत्रयप्रहरावधि जपान्तेपुनःप्रणवमुक्त्वा त्वंमालेसर्वदेवानांप्रीतिदाशुभदाभव । शिवंकुरुष्वमेभद्रेयशोवीर्यंचसर्वदा १ इतिमालांशिरसिनिधायत्रिःप्राणानायम्यन्यासत्रयंकृत्वाजपमीश्वरार्पणंकुर्यात् प्रत्यहंसमानसंख्यएवजपोनतुन्यूनाधिकः एवंपुरश्चरणजपसमाप्तौहोमः पुरश्चरणसाङ्गतासिद्ध्यर्थंहोमविधिंकरिष्यइतिसंकल्प्याग्निंप्रतिष्ठाप्यपीठेसूर्यादिनवग्रहपूजनादिकलशस्थापनान्तेअन्वादध्यात् चक्षुषीआज्येनेत्यन्तेग्रहपीठदेवतान्वाधानमर्कादिसमिच्चर्वाज्याहुतिभिःकृत्वाप्रधानदेवतांसवितारंचतुर्विंशतिसहस्रतिलाहुतिभिस्त्रिसहस्रसंख्याकाभिःपायसाहुतिभिर्घृतमिश्रतिलाहुतिभिर्दूर्वाहुतिभिः क्षीरद्रुमसमिदाहुतिभिश्च शेषेणस्विष्टकृतमित्यादिचरुपायसतिलैःसहाज्यस्य पर्यग्निकरणादि आज्यभागान्तेइदंहवनीयद्रव्यमन्वाधानोक्तदेवताभ्यःअस्तुनममेतियजमानस्त्यागंकुर्यात् होमेसप्रणवाव्याहृतिरहितास्वाहान्तागायत्री दूर्वात्रयस्यैकाहुतिः दूर्वासमिधांदधिमध्वाज्याञ्जनं स्विष्टकृदादिबलिदानान्ते समुद्रज्येष्ठाइत्यादिभिर्यजमानाभिषेकः प्रतिलक्षंसुवर्णनिष्कत्रयंतदर्धंवाशक्त्या

वादक्षिणाहोमान्तेजलेदेवंसवितारंसंपूज्यहोमसंख्यादशांशेन २४०० गायत्र्यन्तेसवितारंतर्पयामीत्युक्त्वातर्पणंकार्यम् तर्पणदशांशेन २४० गायत्र्यन्तेआत्मानमभिषिञ्चामिनमइति स्वमूर्ध्न्यभिषेकः होमतर्पणाभिषेकाणांमध्ये यदेवनसंभवतितत्स्थानेतद्द्विगुणोजपःकार्यः अभिषेकसंख्यादशांशेनाधिकंवाविप्रभोजनम् पुरश्चरणंपूर्णमस्त्विति विप्रान्वाचयित्वेश्वरार्पणंकार्यम् प्रत्यहं यज्ञाग्रतइतिशिवसंकल्पमन्त्रस्यत्रिःपाठः कर्ताब्राह्मणैःसहहविष्याशीसत्यवागधःशायीपरिगृहीतभूप्रदेशानतिचारीचभवेत् इत्यनन्तदेवीयानुसारेणचतुर्विंशतिलक्षपुरश्चरणप्रयोगः ऋग्विधानेतु मध्याह्नेमितभुक्मौनीत्रिःस्नानार्चनतत्परः । लक्षत्रयंजपेद्धीमानितित्रिलक्षंपुरश्चरणमुक्तम् जपशतांशस्त्रिसहस्रं होमः कलौचतुर्गुणंप्रोक्तमितिपक्षेद्वादशलक्षजपः द्वादशसहस्रहोमइत्याद्यूह्यम् विष्णुशयनमासेषुपुरश्चरणंनकार्यम् तीर्थादौशीघ्रंसिद्धिः बिल्ववृक्षाश्रयेणजपेएकाहात्सिद्धिरितिसर्वमन्त्रप्रक्रिया इतिगायत्रीपुरश्चरणम् ॥

१४४ अथपूर्तकमलाकरेअश्वत्थोपनयनम् तच्चवर्णैःक्रमेणवृक्षस्थापनादष्टमेएकादशेद्वादशेवर्षेउपनयनोक्तमुहूर्तेपूर्वाह्णेकार्यम् शूद्रस्थापिताश्वत्थेपौराणिकमन्त्रैरारामप्रतिष्ठामात्रंकार्यंनोपनयनम् अथप्रयोगः कर्तादेशकालौसंकीर्त्यसर्वपापक्षयकुलकोटिसमुद्धरणपूर्वकविष्णुसायुज्यप्राप्तिकामोऽश्वत्थोपनयनंकरिष्येइतिसंकल्प्यनान्दीश्राद्धान्तेआचार्यंवृणुयात् आचार्यःपञ्चामृतैःशुद्धोदकैःसर्वौषधिजलैश्चाश्वत्थमभिषिच्यपिष्टातकेनालंकृत्यतत्पूर्वेस्थण्डिलेऽग्निंप्रतिष्ठाप्यान्वाधाने अग्निंवायुंसूर्यंत्रिरग्निंपवमानंप्रजापतिंद्विरोषधीर्वनस्पतिंपिप्पलंप्रजापतिंचपालाशसमिच्चर्वाज्यैःप्रत्येकमेकैकयाहुत्या शेषेणेत्यादि अष्टचत्वारिंशन्मुष्टीनांतूष्णींनिर्वापप्रोक्षणे श्रपणाद्याज्यभागान्ते युवंवस्त्राणीत्यश्वत्थंवस्त्रयुग्मेनावेष्ट्ययज्ञोपवीतमितियज्ञोपवीतंदत्त्वाप्रावेपामेतिमेखलांत्रिरावेष्ट्यअजिनंदण्डंचतूष्णींदत्त्वाअश्वत्थेवइत्यृचागन्धपुष्पैःसंपूज्यदेवस्यत्वेतिमन्त्रान्तेहस्तंगृह्णाम्यश्वत्थेतिस्पृष्ट्वासप्रणवव्याहृतिकांगायत्रींत्रिर्जपित्वा अश्वत्थेवोनिषदनसूक्तेन व्याहृतिभिश्चाश्वत्थंस्थापयामीतिस्वर्णशलाकयास्पृष्ट्वाऽऽज्यपलाशसमिच्चरुभिःप्रत्येकं द्वादशमन्त्रैर्द्वादशाहुतीर्जुहुयात् मन्त्रस्तु भूःस्वाहा अग्नयइदं० । भुवःस्वा० वायव० । स्वःस्वा० सूर्याये० । अग्नआयूंषि० अग्निर्ऋषिः० अग्नेपवस्वस्वेतित्रिभिरग्नयेपवमानायेदं० । प्रजापतेनत्व० प्रजापतय० । ओषधयःसंवदन्ते० अश्वत्थेवो० ओषधीभ्यइदं० । वनस्पतेशत० वनस्पतयइ० । द्वासुपर्णा० पिप्पलायेदं० । समस्तव्याहृतिभिःप्रजापतयइदं० स्विष्टकृदादिहोमशेषंसमाप्याश्वत्थेवइतिगन्धपुष्पधूपदीपनैवेद्यफलताम्बूलाद्यैःसंपूज्याश्वत्थंस्पृष्ट्वाचार्यायगामन्येभ्योदक्षिणांदत्त्वाश्वत्थवस्त्रादिकमाचार्यायदत्त्वाष्टौविप्रान्भोजयेदिति ॥

१४५ अपुत्रेणपुंसास्त्रियावावटप्लक्षाम्रादेःपुत्रत्वेनप्रतिग्रहःकार्यः देशका-लौसंकीर्त्यमहापापक्षयकुलत्रयसमुद्धरणप्रजापतिपुरगमननिरयस्थपितृद्धार-मधुधारातृप्तिसिद्ध्यर्थंसपुत्रत्वसिद्ध्यर्थममुकवृक्षंप्रतिग्रहीष्येइतिसंकल्प्योप-वासंकृत्वारात्रौअष्टविप्रानाहूयचन्द्रंसंपूज्यजागरंभूशयनंवाकृत्वाप्रातर्वृक्षंसंपू-ज्यतच्छायायांविप्रान्संभोज्यपुण्याहंवाचयित्वाप्रार्थयेत् अपुत्रोभगवन्तो-त्रपुत्रप्रतिकृतिंतरुम् । ग्रहीष्यामिममानुज्ञांकर्तुमर्हथसत्तमाः १ ताम्रपात्रेप-ञ्चसौवर्णफलानिवीजपञ्चरत्नयुतान्यधिवास्यलोकपालबलीन्दद्यात् परेद्युस्ति-लाज्यचरुभिरष्टशतंवनस्पतिमन्त्रेणहुत्वाजातकर्मादिविवाहान्तसंस्कारान्कृ-त्वाऽभिषिक्तःकर्तापुष्पाञ्जलिमादायप्रार्थयेत् येशाखिनःशिखरिणांशिरसा विभूषायेनन्दनादिषुवनेषुकृतप्रतिष्ठाः । येकामदाःसुरनरोरगकिन्नराणांतेमे नतस्यदुरितार्तिहराभवन्तु १ एतेद्विजाविधिवदत्रहुतोहुताशःपश्यत्यसौचहि-मदीधितिरन्तरस्थः । त्वंवृक्षपुत्रपरिकल्प्यमयावृतोऽसिकार्यंसदैवभवताम-पुत्रकार्यम् २ अङ्गादङ्गादितिरपृष्ट्वाविप्रेभ्योदक्षिणांदत्त्वाविसृजेत् इतिवटा-दितरुपुत्रविधिः ॥

१४६ अथसकलकर्मसाधारणपरिभाषा सर्वेषुपाकयज्ञेषुभवेद्ब्रह्माकृता-कृतः । पात्रासादनमिच्छातआज्यादिश्रपणादिच १ स्रुवादिमार्जनंचेध्मर-ज्जुप्रहरणंतथा । पूर्णपात्रंभवेन्नित्यमाज्यस्योत्पवनेतथा २ व्रीहीणामवघा-तश्चतण्डुलेषुकृताकृतः । द्रवीभूतघृतस्यापिविलापनविधिस्तथा ३ प्रतिपदो-क्ताज्यहोमेपरिस्तरणंविकल्पितम् । अनादिष्टाज्यहोमेतुनित्यम् आज्यभागस-हिततद्रहितकर्मणोस्तन्त्रप्रयोगेआज्यभागाननुष्ठानमेवयुक्तम् सर्वत्राज्यभाग-योर्विकल्पनात् अनेकपाकयज्ञानामेककालानुष्ठानेसमानतन्त्रता तेनस्विष्ट-कृदाद्येकमेव यत्रद्रव्यंनोक्तंतत्राज्यंग्राह्यम् मन्त्रान्तेकर्मकर्तव्यंमन्त्रस्यकरण-त्वतः । कर्मावृत्तौतुमन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि १ समन्त्रकहोमेतूष्णींनिर्वापः सनाम्नाहोमेनाम्नैवनिर्वापादि यत्रमन्त्रेणनाम्नावाहोमोनोक्तस्तत्रनाम्नैवहोमः स-मन्त्रकहोमेसहैवानेकदैवत्यचरुपाकेपिनविभागोनाभिमर्शश्च अनुक्तौदक्षिण-करः दिशामनुक्तौप्राच्युदीचीशान्यः तिष्ठन्नासीनइत्याद्यनुक्तावासीनतैव अ-नादेशेस्वयंकर्ता अविज्ञातस्वरोमन्त्रःसौत्रएकश्रुतिर्भवेत् । होमेषुमन्त्रंस्वाहा-न्तंप्रणवाद्यंचकारयेत् २ विप्रादीनांद्विदर्भस्यात्पवित्रंग्रथितंनवा । आहुतिप्र-माणम् कर्षप्रमाणमाज्यादिलाजामुष्टिमितामताः । अन्नंग्राससमंग्राह्यंक-न्दानामष्टमोंशकः १ तिलसक्तुकणादीनांमृगीमुद्राप्रमाणतः ताम्रपात्रेणपि-हितेताम्रपात्रादिकेशुभे २ अग्निप्रणयनंकार्यंमृन्मयेराजतादिके । उत्तमः श्रोत्रियागारान्मध्यमःस्वगृहादितः ३ नाप्रोक्षितमिन्धनमग्नावादध्यात् सदो-पवीतिनाभाव्यंसदाबद्धशिखेनच । सदेतिकर्माङ्गतापुरुषार्थताच तेनकर्म-

कालेशिखाबन्धाद्यभावेप्रायश्चित्तद्वयमन्यदेकमेव दशविधादर्भोउक्ताः वट-प्लक्षबिल्ववैकङ्कतचन्दनदेवदारुसरलवृक्षजाअपिकचित्समिधः प्रभुःप्रथमकल्पस्ययोऽनुकल्पेनवर्तते सनाप्नोतिफलंतस्यपरत्रेतिश्रुतिःस्मृतिः १ बह्वल्पंवास्वगृह्योक्तंयस्ययत्कर्मचोदितम् । तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेत् २ अथकर्मविशेषेग्निनामानि अग्निस्तुमरुतोनामगर्भाधानेविधीयते। पवमानः पुंसवनेसीमन्तेमङ्गलाभिधः १ प्रवलोजातसंस्कारेपार्थिवोनामकर्मणि । अन्नाशनेशुचिःप्रोक्तःसभ्यःस्याच्चौलकर्मणि २ व्रतादेशेसमुद्भवः गोदानादौसूर्यः विवाहेयोजकः आवसथ्येद्विजनामा प्रायश्चित्तेविटः पाकयज्ञेषुपावकः पित्र्येकव्यवाहनः दैवेहव्यवाहनः शान्तिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः मृतदाहेक्रव्यादः ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् । पलाशेनजुहूःकार्याखदिरेणस्रुवःस्रुचः । तदभावेयथालाभयज्ञियवृक्षजाः तदभावेपलाशमध्यपर्णैर्वापिप्पलपर्णैर्वाहोमः एवंचमसादयोपिखदिरादियज्ञियवृक्षजाः काम्येप्रतिनिधिर्नास्तिनित्येनैमित्तिकेहिसः । काम्येप्युपक्रमादूर्ध्वमन्येप्रतिनिधिंविदुः १ नस्यात्प्रतिधिर्मन्त्रकर्मदेवाग्निकर्तृषु । नदेशारणिकालेषुत्रिषुप्रतिनिधिर्मतः २ नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् । स्वकालादुत्तरोगौणःकालः सर्वस्यकर्मणः ३ तर्पणेष्वासनेश्राद्धेभुक्तौमूत्रपुरीषयोः षट्सुनिर्माल्यकादर्भादर्व्याद्याआभिचारके ४ मन्त्रोपियश्चशूद्रार्थेब्राह्मणःप्रेतभोजने ॥

१४७ अथकर्माङ्गदेवताः विवाहस्याग्निर्देवता तेनविवाहाङ्गभूतस्वस्तिवाचनाद्यन्तेकर्माङ्गदेवताग्निःप्रीयतामितिवदेत् औपासनेऽग्निसूर्यप्रजापतयः स्थालीपाकेऽग्निः गर्भाधानेब्रह्मा पुंसवनेप्रजापतिः सीमन्तेधाता जातकर्मणि मृत्युः नामकर्मनिष्क्रमणान्नप्राशनेषुसविता चौलेकेशिनः उपनयनेइन्द्रश्रद्धामेधाः अन्तेसुश्रवाः पुनरुपनयनेऽग्निः समावर्तनस्येन्द्रः उपाकर्मणिव्रतेषुचसविता वास्तुहोमेवास्तोष्पतिरन्तेप्रजापतिः आग्रयणेआग्रयणदेवताः सर्पवलेःसर्पाः तडागादीनांवरुणः ग्रहयज्ञेआदित्यादिनवग्रहाः कूष्माण्डहोमेचान्द्रायणेअग्न्याधानेचाग्न्यादयः अग्निष्टोमस्याग्निः अन्येष्विष्टकर्मसुप्रजापतिरिति ॥

१४८ अथ कलियुगेकार्याकार्यविवेकः गीतागङ्गातथाविष्णुःकपिलाश्वत्थसेवनम् । एकादशीव्रतंचैवसप्तमंनकलौयुगे १ विष्णुंशिवंवाभजतांगुरोःपित्रोश्चसेविनाम् । गोवैष्णवमहाशैवतुलसीसेविनामपि २ नस्यात्कलिकृतोदोषःकाश्यांनिवसतामपि । कलौगुरूणांभजनमीशभक्त्यधिकंस्मृतम् ३ जपादौयत्रयासंख्याकलौसास्याच्चतुर्गुणा । कलौदानंमहाश्रेष्ठंशिवविष्णोश्चकीर्तनम् ४ कृतेयद्दशभिर्वर्षैस्त्रेतायांहायनेनतु । द्वापरेतच्चमासेनअहोरात्रेणतत्कलौ ५ प्रथमस्कन्धे कुशलान्याशुसिद्धयन्तिनेतराणिकृतानियदितिकलौ-

पुण्यकर्मणांसंकल्पेऽपिसिद्धिः पापानांत्वाचरणादेवेत्युक्तम् स्मृत्यन्तरविरोधेतुकलौपाराशरस्मृतिः । ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेऽर्चयन् । यदाप्नोतितदाप्नोतिकलौसंकीर्त्यकेशवम् १ इतिहेमाद्रौव्यासवचनम् अत्रकृतयुगाद्यधिकरणकध्यानादिफलार्थेकल्यधिकरणकंकीर्तनंविधीयतइतिवाक्यार्थःकौस्तुभकर्तृपितामहैर्भक्तिनिर्णयेविस्तरेणनिरूपितः हेमाद्रौ कलिंसभाजयन्त्यार्यागुणज्ञाःसारभागिनः । यत्रसंकीर्तनेनैवसर्वःस्वार्थोभिलभ्यते १ इति श्रीभागवतवचनमुदाहृत्यसंकीर्तनेनहरिसंकीर्तनेनेत्यर्थइतिहेमाद्रावेवव्याख्यातम् कृष्णवर्णंत्विषाकृष्णंसाङ्गोपाङ्गास्त्रपार्षदम् । यज्ञैःसंकीर्तनप्रायैर्यजन्तिहिसुमेधसः १ यज्ञादिस्वस्वाचारमाचरद्भिरपिकालेषुसंकीर्तननिष्ठैर्भाव्यमित्याशयइतिकौस्तुभे अनेनचतुर्वर्गफलंनारायणाश्रयणमात्रेणभवतीतिसिद्धम् यावैसाधनसंपत्तिःपुरुषार्थचतुष्टये । तयाविनातदाप्नोतिनरोनारायणाश्रयः १ इतिभारतोक्तेः श्रीभागवतेऽपि धर्मार्थकाममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः । एकंह्येवहरेस्तत्रकारणंपादसेवनम् १ इति अत्रएकपदावधारणादिपदैरन्यसाधनानपेक्षत्वंभक्तियोगस्योच्यते ज्ञानयोगादेश्चहरिपादसेवनसापेक्षत्वंध्वन्यते तथाचस्पष्टमेकादशादौ तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः । नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिह १ यत्कर्मभिर्यत्तपसाज्ञानवैराग्यतश्चयत् । योगेनदानधर्मेणश्रेयोभिरितरैरपि २ सर्वंमद्भक्तियोगेनमद्भक्तोलभतेञ्जसा । स्वर्गापवर्गंमद्धामकथंचिद्यदिवाञ्छति ३ इति श्रेयःसृतिंभक्तिमुदस्यतेविभोक्लिश्यन्तियेकेवलबोधलब्धये । तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतुषावघातिनाम् १ इत्यादिपरस्सहस्रवचनानि ज्ञानयोगस्यभगवदाराधनंतत्प्रसादंचविनैवसिद्धिरितिकापिकेनाप्यनुक्तेश्च सर्वापेक्षाचयज्ञादिश्रुतेरश्ववदित्यधिकरणेज्ञानोत्पत्तौयज्ञादिसर्वसाधनापेक्षोक्तेश्च किंचभक्तियोगेदुराचारिणोपिदृढवैराग्यरहितस्याप्यधिकारोगम्यते अपिचेत्सुदुराचारोभजतेमामनन्यभाक् । साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः १ क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति । कौन्तेयप्रतिजानीहिनमेभक्तःप्रणश्यति २ ननिर्विण्णोनातिसक्तोभक्तियोगोस्यसिद्धिदः । इत्यादिवचनेभ्यः नैवंदुराचारिणापिदृढवैराग्यादिसाधनचतुष्टयसंपत्त्यभावेपि वेदान्तश्रवणाद्यनुष्ठितौज्ञानोत्पत्तिर्भवतीतिक्वाप्युपलभ्यते नचयथोक्ताधिकारसंपत्तिं विनानुष्ठितंसाधनंकिमपिफलायकल्पते तस्मात्सर्वथासर्वैःकलौश्रीहरिपादसेवनादिभक्तियोगाश्रयणमेवकर्तव्यमितिसिद्धम् ॥

१४९ अथकलौनिषिद्धानि समुद्रयात्रास्वीकारःकमण्डलुविधारणम् द्विजानामसवर्णासुकन्यासूपयमस्तथा १ देवराच्चैःसुतोत्पत्तिर्मधुपर्केपशोर्वधः मांसदानंतथाश्राद्धेवानप्रस्थाश्रमस्तथा २ दत्ताक्षतायाःकन्यायाः पुनर्दानंपरस्यच । दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ ३ महाप्रस्थानगमनंगोमे-

धश्चतथामखः । इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः ४ मद्यंवर्ज्यंमहापापेमरणान्तविशोधनम् । सौत्रामण्यादियज्ञेपिसुरापात्रग्रहस्तथा ५ मद्यभक्षादिवामाद्यागमस्यतुनमानता । मीमांसाद्वितयेसर्वशिष्टैश्चतदनादरात् ६ औरसोदत्तकश्चैतौपुत्रौकलियुगेस्मृतौ । अन्यान्दशविधान्पुत्रान्क्रीताद्यान्वर्जयेत्कलौ ७ कौस्तुभेस्वयंदत्तस्तृतीयोपिकलौविहितइतिनवैवकलौनिषिद्धाइत्युक्तम् कलियुगेब्रह्महत्रादेरेवाव्यवहार्यत्वादिरूपंपातित्यम् तत्संसर्गिणस्तुनरकहेतुदोषसत्त्वेपिपातित्यंनास्ति संसर्गदोषःपापेष्वितिकलिवर्ज्येषुवचनात् कृतेसंभाष्यपततित्रेतायांस्पर्शनेनतु । द्वापरेत्वन्नमादायकलौपततिकर्मणा १ इतिवचनाच्च ब्रह्महननादिकर्मणैवपातित्यंनसंसर्गमात्रेणेतितदर्थात् इदंचलोकेष्ववहिष्कृतपातकिपुलोकविद्विष्टत्वेनापरिहार्यसंसर्गेपातित्याभावपरम् नहिलोकेष्वबहिष्कृतानांप्रच्छन्नाभक्ष्यभक्षणापेयपानागम्यागमनादिपातकवतांतज्ज्ञानवतातिशिष्टेनापिसंभाषणादिसंसर्गोनरकहेतुरपि परिहर्तुंशक्यते लोकविद्वेषापातात् लोकबहिष्कृतपापिनांसंसर्गस्तुपातित्यहेतुरेव तथैवशिष्टाचारादितिमेभाति अतएव त्यजेद्देशंकृतयुगेत्रेतायांग्रासमुत्सृजेत् । द्वापरेकुलमेकंतुकर्तारंतुकलौयुगे १ इतिवाक्येकर्तृत्यागोविधीयते त्यागोहिसंसर्गपरिहारएव किंचानेनवाक्येनयत्रकुलादौब्रह्महत्यादिपातकीनिष्पद्यतेतत्कुलादिकंद्वापरादावेववहिष्कार्यंनतुकलौकुलादेर्बहिष्कारः किंतुकर्तुरेवकलौबहिष्कारइतिप्रतिपाद्यते नचैतद्वाक्यविरोधिवाक्यान्तरंपतितसगोत्रसपिण्डादीनांकर्मानर्हत्वासंव्यवहार्यत्वप्रतिपादकंक्वापिग्रन्थेउपलभ्यते यत्तुनिर्णयसिन्धौघटस्फोटप्रकरणेगृहेषुस्वैरमापद्येरन्इतिवसिष्ठवचनसामर्थ्यात्पात्रनिनयनात्प्राक्पतितज्ञातीनांधर्मकार्येष्वधिकारोनास्तीत्यपरार्कव्याख्यानमुपन्यस्तंतन्नसर्वपतितविषयम् किंतु घटस्फोटार्हप्रायश्चित्तानिच्छुपतितविषयम् अन्यथापात्रनिनयनात्प्रागितिनवदेत् प्रायश्चित्तात्प्रागित्येववदेत् कर्तारंतुकलौयुगेइत्यादिप्रत्यक्षवचनेनविरोधेर्थापत्तिमूलकस्यसर्वपतितविषयककुलबहिष्कारवर्णनस्यपुरुषव्याख्यानरूपस्याप्रामाण्यापाताच्चेतिभातिइतिसंक्षेपः नचैवंघटस्फोटविधिर्व्यर्थइतिवाच्यम् तस्यपारलौकिकदोषपरिहारार्थत्वात् लोकबहिष्कृतपातकिविषयेसंभाषणादिसंसर्गस्यपातित्यहेतुत्वाभावेऽपिपरत्रनरकजनकदोषहेतुत्ववत्पतितेनसहैककुलत्वसंसर्गस्यापीहपातित्यादिदोषहेतुत्वाभावेऽपिपारत्रिकदोषहेतुत्वात् अत्रचघटस्फोटविधेरेवार्थापत्तिविधयामानत्वात् तथाच पारत्रिकदोषपरिहारार्थंघटस्फोटविधिरितिनतद्विधिबलेनपतितमात्रस्यकुलेबहिष्कारः सत्राख्ययज्ञःकलौवर्ज्यः ब्रह्महत्यादिमहापातकेषुप्रायश्चित्तेनननरकनिवृत्तिर्नभवतिकिंत्विहलोकेव्यवहार्यतामात्रंकलौभ-

वति स्वर्णस्तेयादिपुतुप्रायश्चित्तेननरकनिवृत्तिर्व्यवहार्यताच केचित्तुरहस्य-कृतेषुमहापापेषुरहस्यप्रायश्चित्तंकलौनोपदेष्टव्यमित्याहुः विप्रादिस्त्रीसंभोगेन भ्रष्टानांशूद्रादीनांप्रायश्चित्तेऽपिसंसर्गोनिषिद्धः यज्ञेपशुमारणंसोमविक्रयश्च विप्राणांकलौवर्ज्यः ज्येष्ठादिसर्वभ्रातॄणांसमभागःकलौस्मृतः । आततायिद्वि-जानांनोधर्मयुद्धेऽपिहिंसनम् १ अब्धौनौयातुर्द्विजस्यप्रायश्चित्तेऽपिसंसर्गोन गवार्थेब्राह्मणार्थेचप्राणत्यागःकलौनहि । द्विजानांगोपशूद्रादौभोज्यान्नलंक-लौनहि १ शिष्यस्यगुरुपत्नीषुनचिरंवासशीलता । आपदिक्षत्रवैश्यादिवृ-त्तिविप्रःकलौत्यजेत् २ कलौद्विजोनहिभवेदश्वस्तनिकजीविकः । द्वादशाब्दं गुरौवासंमुखाग्निधमनक्रियाम् ३ यतेर्भिक्षांसर्ववर्णेकलौत्रीणिविवर्जयेत् । नवोदकनिषेधंचदक्षिणांगुरुवाञ्छिताम् ४ वृद्धरुग्णादिमरणंजलाग्निपतना-दिभिः । गोतृप्तिमात्रेभूमिष्ठेपयस्याचमनक्रियाम् ५ पितृवादेसाक्षिदण्डंकलौ पञ्चविवर्जयेत् । घृतदुग्धादिभिःपक्वमन्नंशूद्रात्कलौत्यजेत् भिक्षामटन्यतीरा-त्रौनवसेद्गृहिणांगृहे । विधूमेसन्नमुसलेकालेभिक्षांकलौत्यजेत् ७ चत्वार्यब्द-सहस्राणिचत्वार्यब्दशतानिच । कलेर्यदागमिष्यन्तितदात्रेतापरिग्रहः ८ सं-न्यासश्चनकर्त्तव्योब्राह्मणेनविजानता । त्रेतापरिग्रहःसर्वाधानम् अर्धाधानंस्मृतं श्रौतस्मार्ताग्न्योस्तुपृथक्कृतिः सर्वाधानंतयोरैक्यकृतिःपूर्वयुगाश्रया ९ अ-स्यापवादः यावद्वर्णविभागोऽस्तियावद्वेदःप्रवर्तते । संन्यासंचाग्निहोत्रंचता-वत्कुर्यात्कलौयुगे १० इति शपथाःशकुनाःस्वप्नाःसामुद्रिकमुपश्रुतिः । देव-पूजोपहारादेःसंकल्पःकार्यसिद्धये १ प्रश्नोत्तरंकालविदांसंभवन्तिकलौक-चित् । इतिकलौकार्याकार्यनिर्णयः ॥

१५० अथस्वप्नविचारः स्वप्नोद्विविधः इष्टफलोऽनिष्टफलश्चेति तत्रसामा-न्यतइष्टफलोयथा नदीसमुद्रतरणमाकाशगमनंतथा । गृहनक्षत्रमार्तण्डचन्द्रम-ण्डलदर्शनम् १ हर्म्यस्यारोहणंचैवप्रासादशिरसोपिवा स्व-प्रेचमदिरापानंवसामांसस्यभक्षणम् २ कृमिविष्ठानुलेपश्चरुधिरेणाभिषेचनम् । भोजनंदधिभक्तस्यश्वेतवस्त्रानुलेपनम् ३ रत्नान्याभरणादीनिस्वप्नेदृष्ट्वाप्रसि-

इष्टफलःस्वप्नः

---

१ शूद्रहस्तेनकार्यंनतुविप्रेणस्वयंकार्यमित्यर्थः ॥ २ हेमाद्रौमरीचिः । मासंकारागृहेवासो नौभिर्यातोदिनत्रयम् ॥ म्लेच्छावासस्तथापक्षंयोवर्ततेसपातकी ॥ इति ॥ दिनकरोद्योते कृ-तप्रत्यंतदेशगमनप्रायश्चित्तस्यापि नौयातुः संसर्गो निषिद्धइति ॥ संवत्सरकौस्तुभे प्रत्यन्त-देशगमननिमित्तपुनःसंस्कारेकृतेप्यब्धौनौयातुःसंसर्गःकलौनिषिद्धयतइति ॥ व्यवहारमयूखे नारदः । पितृद्विट्पतितःषण्ढोयश्चस्यादपयात्रितः ॥ औरसाअपिनैतेंशंलभेरन्क्षेत्रजाःकुतः । अपयात्रितः व्यवहारार्थंनावादिनासमुद्रमध्येद्वीपान्तरगतः ॥ द्विजस्याब्धौतुनौयातुःशोधित-स्यापिसंग्रहइति तस्यकलौसंसर्गनिषेधादिति ॥

द्ध्यति । देवताविप्रपृथ्वीशान्प्रशस्ताभरणाङ्गनाः ४ वृषेभपर्वतक्षीरिफलिवृक्षाधिरोहणम् । दर्पणामिषमाल्याप्तिंशुक्लपुष्पाम्बराश्रितान् । दृष्ट्वास्वप्नेर्थलाभःस्याद्व्याधिमोक्षश्चजायते ५ अथानिष्टफलः दुष्टंकिंशुकवल्मीकपारिभद्राधिरोहणम् । तैलकार्पासपिण्याकलोहप्राप्तिर्विपत्तये १ विवाहकरणंस्वप्नेरक्तवस्त्र-

अनिष्टफलः. ग्वस्त्रधारणम् । स्रोतसाहरणंनेष्टंपक्वमांसस्यभोजनम् २ आदित्यस्याथचन्द्रस्यनिष्प्रभस्यावलोकनम् नक्षत्रादेश्चपातस्यस्वप्नेमरणशोककृत् ३ अशोककरवीरपलाशानांपुष्पितानांस्वप्नेदर्शनेशोकः नौकारोहणेप्रवासः रक्तवस्त्रगन्धधारिण्यास्त्रियालिङ्गनेमृत्युः घृततैलादिनाभ्यङ्गेव्याधिःकेशदन्तपातेधननाशःपुत्रशोकोवा खरोष्ट्रमहिषैर्यानेतद्युक्तरथारोहणेवामृत्युः कर्णनासाकरादिच्छेदेपङ्कमज्जनेतैलाभ्यङ्गेविषभक्षणेप्रेतालिङ्गनेनलदमालिनोदिगम्बरस्ययानेकृष्णपुरुषदर्शनेच मृत्युः ॥

१५१ अथजागृतावनिष्टानि अरुन्धतींध्रुवंचैवनभोमन्दाकिनींतथा । स्वनासाग्रंचचन्द्राङ्कमायुर्हीनोनपश्यति १ पांसुपङ्कादिषुन्यस्तचरणंखण्डितंयदि । स्नानाम्बुलिप्तगात्रस्ययस्यास्यंप्राक्प्रशुष्यति २ गात्रेष्वार्द्रेषुसर्वेषुसूर्यादिद्वयदर्शनम् । स्वर्णप्रतीतिर्वृक्षेषुस्वपदानामदर्शनम् ३ पिहितेकर्णयुगुले यस्यघोषानुपश्रुतिः अदर्शनंस्वशिरसःप्रतिबिम्बेजलादिषु ४ छिद्रप्रतीतिश्छायायांसचिरंनैवजीवति ॥

१५१ अथविशेषतइष्टफलाःस्वप्नाः यस्तुपश्यतिवैस्वप्नेराजानंकुञ्जरंहयम् । सुवर्णंवृषभंगांवाकुटुम्बंतस्यवर्धते १ वृषंवृक्षंवारुह्यतत्रस्थस्यजागरेधनाप्तिः श्वेतसर्पेणदक्षिणभुजदंशेदशदिनेसहस्रधनलाभः जलस्थस्यवृश्चिकोरगग्रासेजयपुत्रधनानि प्रासादशैलारोहणेसमुद्रतरणेराज्यम् तडागमध्येपद्मपत्रेषुघृतपायसभोजनेराज्यम् बलाकाकुकुटीक्रौञ्चीदर्शनेभार्याप्राप्तिः निगडैर्बन्धेवहुपाशबन्धेवापुत्रधनादि आसनेशयनेयाने शरीरेवाहनेगृहे । ज्वलमानेविबुध्येततस्यश्रीःसर्वतोमुखी १ सूर्यचन्द्रमण्डलदर्शनेरोगिणोरोगनाशोन्यस्यधनम् सुरारुधिरयोःपानेविप्रस्यविद्याशूद्रादेर्धनम् शुक्लाम्बरगन्धधारिण्यासुभगस्त्रियालिङ्गनेसंपत्तिः छत्रपादुकोपानत्खड्गलाभेधनम् वृषभयुक्तरथारोहणेधनम् दधिलाभेवेदाप्तिः दधिपयःपानेघृतलाभेचयशः घृतभक्षणेक्लेशः अन्त्रैर्वेष्टनेराज्यम् मनुष्यस्यचरणमांसभक्षणेशतंलाभः बाहुभक्षणेसहस्रम् शीर्षमांसभक्षणेराज्यं वा सहस्रधनंवा सफेनक्षीरपानेसोमपानम् गोधूमदर्शनेधनलाभः यवदर्शने यज्ञः गौरसर्षपदर्शनेलाभः नागपत्रंलभेत्स्वप्नेकर्पूरागमनंतथा । चन्दनंपाण्डुरंपुष्पंतस्यश्रीःसर्वतोमुखी १ सर्वाणिशुक्लान्यतिशोभनानिकार्पासभस्मौदनतक्रवर्ज्यम् । सर्वाणिकृष्णान्यतिनिन्दितानिगोहस्तिदेवद्विजवाजिवर्ज्यम्

२ स्वप्नस्तुप्रथमेयामेवत्सरान्तेफलप्रदः। द्वितीयेऽष्टमासैः तृतीयेत्रिमासान्ते चतुर्थेयामेमासान्ते अरुणोदयेदशाहान्ते सूर्योदयेसद्यःफलम् ॥

१५३ अथदुःस्वप्नदर्शनेकृत्यम् योमेराजन्नित्यृचासूर्योपस्थानेदुःस्वप्ननाशः अधःस्वप्नस्येतिजपाद्वा क्वचिद्दर्शवच्छ्राद्धेनदुःस्वप्ननाशः चण्डीसप्तशतीपाठेनवा यद्वाश्रीविष्णुसहस्रनामस्तोत्रजपःकार्यः अथवाश्रीभारतस्थस्य श्रीमद्भागवतस्थस्यवागजेन्द्रमोक्षस्यश्रवणंपाठोवा इतिदुःस्वप्ननाशकविधिः

१५४ इत्थंगर्भाधानादुद्वाहान्ताःसमस्तसंस्काराः। सपरिकरानिर्णीता अस्मिंस्तार्तीयपूर्वार्धे १ ततआह्निकआचारस्ततआधानादिकाःप्रकीर्णार्थाः। शान्तिकपौष्टिकमुख्यानित्यानैमित्तिकाश्चोक्ताः २ पूर्वपरिच्छेदकयोःकालः सामान्यतोविशेषाच्च। निर्णीतःसहकृत्यैस्तिथिमासाद्येषुविध्युक्तैः ३ नानापापेप्रायश्चित्तंव्यवहारविस्तरश्चापि। उपदानमहादानादिविधिश्चोक्तोमयूखादौ ४ श्राद्धविधिःसाङ्गोप्याशौचेनिर्णीतिरन्त्यसंस्कारः। तार्तीयकस्योत्तरखण्डेग्रेसंप्रवक्ष्यन्ते ५ मूलभूतानिपद्यानिविकृतानिक्वचित्क्वचित्। निर्विकाराण्यपिनवान्यप्युक्तान्यत्रकानिचित् ६ मीमांसाधर्मशास्त्रज्ञाःसुधियोनलसाबुधाः। कृतकार्याःप्राङ्निबन्धैस्तदर्थंनायमुद्यमः ७ येपुनर्मन्दमतयोऽलसाअज्ञाश्चनिर्णयम्। धर्मैवेदितुमिच्छन्तिरचितस्तदपेक्षया ८ निबन्धोयं धर्मसिन्धुसारनामासुबोधनः। अमुनाप्रीयतांश्रीमद्विठ्ठलोभक्तवत्सलः ९ प्रेम्णासद्भिर्ग्रन्थःसेव्यःशब्दार्थतःसदोषोपि। संशोध्यवापिहरिणासुदाममुनिसतुषपृथुकमुष्टिरिव १० श्रीकाश्युपाध्यायवरोमहात्माबभूवविद्वद्द्विजसार्वभौमः। तस्मादुपाध्यायकुलावतंसौयज्ञेश्वरोनन्तइमावभूताम् ११ यज्ञेश्वरोयज्ञविधानदक्षोदैवज्ञवेदाङ्गसुशास्त्रशिक्षः। भक्तोत्तमोऽनन्तगुणैकधामानन्ताह्वयोनन्तकलावतारः १२ एषोत्सजज्जन्मभुवंस्वकीयांतांकौङ्कणाख्यांसुविरक्तिशाली। श्रीपाण्डुरंगेवसतिंविधायभीमातटेमुक्तिमगात्सुभक्त्या १३ तस्यानन्ताभिधानस्योपाध्यायस्यसुतःकृती। काशीनाथाभिधोधर्मसिन्धुसारं समातनोत् १४ इति श्रीमत्काश्युपाध्यायसूरिसूनुयज्ञेश्वरोपाध्यायानुजानन्तोपाध्यायसूरिसुतकाशीनाथोपाध्यायविरचिते धर्मसिं० तृती० पूर्वार्धः समाप्तः॥

